# MAHÁ VÍRA CHARITA,

OR

# THE HISTORY OF RÁMA,

A SANSCRIT PLAY,

BY

BHAṬṬA BHAVABHÚTI.

EDITED BY

FRANCIS HENRY TRITHEN,

MEMBER OF THE ASIATIC SOCIETY OF PARIS; OF THE GERMAN ORIENTAL SOCIETY;

*AND OF THE PHILOLOGICAL SOCIETY OF LONDON, &c. &c. &c.*




LONDON:

PRINTED FOR THE SOCIETY FOR THE PUBLICATION OF ORIENTAL TEXTS.

SOLD BY

JAMES MADDEN & Co. 8, LEADENHALL STREET.

MDCCCXLVIII.

TO

HORACE HAYMAN WILSON,

WITH PROFOUND RESPECT,

AND IN GRATEFUL ACKNOWLEDGEMENT

OF THE LEARNING, WISDOM, AND UNWEARIED KINDNESS

WITH WHICH FOR MANY YEARS HE HAS

DIRECTED MY STUDIES.

# ADVERTISEMENT.

---

THIS, the first edition of the Víra Charita—a Play commonly ascribed to Bhavabhúti—is grounded upon two Devanágarí Manuscripts in the Library of the East-India House. One of them, dated Samvat 1665, is written with more than usual care and accuracy; but it is unfortunately imperfect, and does not extend beyond the fifth act. The other, bearing the year of Vikramáditya 1857, though complete, is the hasty work of an indifferent scribe, teeming with errors of all kinds; and it was found necessary in more than one instance, in the course of the last two acts, to receive in the Text the reading of Professor Wilson's copy, now deposited in the Bodleian Library at Oxford. I have carefully compared these Manuscripts with each other, and collated many passages of this Play with their re-productions, both in other Dramas (as in the Uttara Ráma Charita, or in the Mahá-nátaka), and in rhetorical works where they are frequently quoted and commented upon. But unless the sense seemed absolutely to require the adoption of any one of the various readings thus collected, I have generally abstained from admitting them in the Text now offered to the Public, as it was my plan to adhere to the London copies, which differ but little from each other, and from either of which the Oxford Manuscript varies but in a slight degree.

In the Prákrit the orthography of many words will be found at variance with the rules laid down by Vararúchi; but as the Manuscripts are generally unanimous in their spelling, I did not consider myself justified in altering it; for this would be to correct the language of one period by the rules of a grammarian belonging to a different age—a proceeding, the absurdity of which is apparent when applied to any modern language. Nor will the reader find the letter व, which has been introduced into all the Continental editions of Sanskrit Plays, as the Prákrit letter corresponding with the Sanskrit प. The Manuscripts make no difference whatever between the व corresponding to the Sanskrit व, and the व corresponding to the Sanskrit प; and to judge from the languages of India of the present day, or from the Spanish, it would be rather the Prákrit व=to the Sanskrit व that would be pronounced like *b* (ब), and not *vice versâ*. There are, moreover, rules in Vararúchi which prove that there was no distinction whatever between these two letters. With regard to the छ, ख, and other aspirated letters, they should, when in the middle of a word, always appear conjointly with the unaspirated letter of the same class preceding them. In the Manuscripts this rule is often disregarded; and whenever they all agree in doing so—and moreover, as it is in some measure only a matter of representing an additional letter, which it is impossible not to pronounce in giving utterance to the sound which follows — I have allowed some of these single medial aspirates to stand in the Text. I have subsequently, however, pointed them out in the Errata.

For the Sanskrit I have followed the usual system adopted by the European scholars, with this only exception, that

wherever, in this book, the Sandhi is broken, either by means of a Viráma, or by not combining two vowels which otherwise would melt into one, the usual practice has been to put a stop ।, a rule which I have followed only in the first two sheets; when I was induced to adopt the punctuation of the Manuscripts, because they invariably follow it, and it is in perfect accordance with the rest of the singularly logical grammar of the Hindús.

Other points in this edition, which might raise a doubt in the minds of the reader, shall be discussed at greater length in the Second Part, which is to contain a list of Various Readings, Critical and Explanatory Notes, and an English Translation.

The Student who wishes to possess himself with a general idea of this Drama, before he undertakes the task of going through it with more particular attention to the language, will derive this advantage from the lucid Analysis which Professor Wilson has given of the Víra Charita in the Appendix to his Hindú Theatre.

The principal object the author had in view in composing this Play, was, as he expresses it himself in the first stanza of the Prologue, to delineate the passion or sentiment of Heroism as it manifests itself in different personages capable of great actions; to shew it forth with all the varieties and shades of intensity and quality it derives, both from the diversity of the characters in whom it is exhibited, and from the alterations in the circumstances which take place in the course of the Drama; and in this Bhavabhúti has succeeded most admirably. Nor is the fame he has acquired as a Poet whose verses are remarkable for the beauty of their construc-

tion, their rhythm, and their melody, at all impaired by a few rough and unreadable passages: it will be observed that they are always required by the subject, and that in this likewise the Poet has shewn the most consummate skill.

I now leave this book in the hands of the Public, in the hope that the more advanced Sanskrit Scholar, to relieve his mind from the severer studies of the ancient literature and institutions of India, will, in taking up this poetical effort of more recent times, derive some pleasure from its perusal. However, one of the principal inducements for publishing this book was the scarcity of the Sanskrit Plays which have been hitherto printed in Europe or in India; and it was thought advisable to print the only unpublished work of a celebrated Poet, in preference to making a new edition of any of the Dramas which have been circulated in Europe.

F. H. TRITHEN.

*September* 1848.

॥ श्रीगणेशाय नमः ॥

---

अथ स्वस्थाय देवाय नित्याय हतपाप्मने ।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः ॥ १ ॥

॥ नान्द्यन्ते सूत्रधारः ॥

अद्य खलु भगवतः कालप्रियनाथस्य यात्रायामार्य्यमिश्राः समादिशन्ति

महापुरुषसंरम्भो यत्र गम्भीरभीषणः
प्रसन्नकर्क्कशा यत्र विपुलार्थाच भारती ।
अप्राकृतेषु पात्रेषु यत्र वीरस्थितो रसः
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते ॥ २ ॥

स संदर्भोऽभिनेतव्य इति । सहर्षं । महावीरचरितं तर्हि प्रयोक्तव्यमित्यादिष्टमर्थतो भवति ।

वश्यवाचः कवेः काव्यं साच रामाश्रया कथा ।
लब्धश्च वाक्यनिष्पन्दनिष्पेषनिकषो जनः ॥ ३ ॥

सोऽहमेतद्विज्ञापयामि । अस्ति दक्षिणापथे पद्मपुरं नाम नगरं । तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरा ब्रह्म-

वादिनः प्रतिवसन्ति । तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसंभवः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातूकर्णीपुत्रः कविर्मित्रधेयमस्माकमित्यत्रभवन्तो विदांकुर्व्वन्तु ।

श्रेष्ठः परमहंसानां महर्षीणामिवाङ्गिराः ।
यथार्थनामा भगवान्यस्य ज्ञाननिधिर्गुरुः ॥ ४ ॥

तेनेदमुद्धतजगत्त्रयमन्युमूल
मस्तोकवीरगुरुसाहसमद्भुतंच ।
वीराद्भुतप्रियतया रघुनन्दनस्य
धर्म्मद्रुहो दमयितुश्चरितं निबद्धं ॥ ५ ॥

तदिदं भवन्तः परिपुनन्तु । उक्तंच तेन श्रोत्रियपुत्रेण ।

प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत्पावनं रघुपतेः प्रणिनाय वृत्तं ।
भक्तस्य तत्र समरंसत मेऽपि वाच
स्ताः सुप्रसन्नमनसः कृतिनो भजन्तां ॥ ६ ॥

॥ प्रविश्य नटः ॥

नटः ॥ कृतप्रसादाः पारिषदाः । किंतु । अपूर्व्वत्वात्प्रबन्धस्य कथाप्रदेशं समारम्भे ज्ञातुमिच्छन्ति ॥

सूत्र० ॥ स तु भगवान्दीक्षिष्यमाणः कौशिको विश्वामित्र ऐक्ष्वाकस्य राजर्षेर्वसिष्ठपुरोधसो दशरथस्य गृहानुपेत्य स्वमेव तपोवनं प्रत्यागतः । स च

विजयि सहजमस्त्रैर्वीर्य्यमुच्छ्रापयिष्यन्
जगदुपकृतिबीजं मैथिलीं प्रापयिष्यन् ।
दशमुखकुलघातश्लाघ्यकल्याणपात्रं
धनुरनुजसहायं रामदेवं निनाय ॥ ७ ॥

निमन्त्रितस्तेन विदेहनाथः
स प्राहिणोद्भ्रातरमात्तदीक्षः ।
कुशध्वजो नाम स एष राजा
सीतोर्म्मिलाभ्यां सहितोऽभ्युपैति ॥ ८ ॥

॥ इति निष्क्रान्तौ ॥

॥ प्रस्तावना ॥

---

॥ ततः प्रविशति रथस्थो राजा सूतः कन्येच ॥

राजा ॥ आयुष्मन्त्यौ सीतोर्म्मिले । अद्य भगवान्विश्वामित्रः श्रद्धधानेन चेतसा वत्साभ्यां प्रणन्तव्यः ।

कन्ये ॥ जधा कणिट्ठतादो आणवेदि ॥

राजा ॥ तुरीयो ह्येष मेध्योऽग्निराम्नायः पञ्चमोऽथवा ॥
अथवा जङ्गमं तीर्थं धर्म्मो वा मूर्त्तिसंचरः ॥ १ ॥

सूतः ॥ साक्षाद्रथनाथ एवमेतत् । न खलु विश्वामित्रादृषेर्महत्वेन कश्चिदपरः प्रकृष्यते । यस्य भगवतस्त्रैशङ्कवं शौनःशेपं रम्भास्तम्भनं चेत्यपरिमेयमाश्चर्य्यजातमाख्यानविद आचक्षते ।

तदस्मिन्ब्रह्माद्यैस्त्रिदशमुनिभिर्नाथितशमे
तपस्तेजोधाम्नि स्वयमुपनतब्रह्मणि गुरौ ।
निवासे विद्यानामुपहितकुटुम्बव्यवहृति
भवानेव श्लाघ्यो जगति गृहमेधी गृहवतां ॥ २ ॥

राजा ॥ साधु भोः साधु सूनृतं हि सूत भाषसे । प्रकृष्टकल्याणोदर्कसंगमा ह्येते भगवन्तः साक्षात्कृतब्रह्माणो महर्षयः ।

तमांसि ध्वंसन्ते परिणमति भूयानुपशमः
सकृत्संवादेऽपि प्रथत इहचामुत्रच शुभं ।
अथ प्रत्यासंगः कमपि महिमानं वितरति
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ ३ ॥

सूतः ॥ दृश्यते हरितपरिसरारण्यरमणीयं कौशिकीपरिक्षिप्तमायतनमृषेस्तस्य सिद्धाश्रमपदं नाम । किं बहुना । स एवायमात्मना तृतीयः कुशिकनन्दनो भवन्तमेवाभ्युद्यतः ॥

राजा ॥ यद्येवमवतरामो रथात् ॥ कन्याभ्यां सहावतीर्य्य ॥ सूत सूत उच्यन्तां सैनिकाः न कैश्चिदाश्रमाभ्यर्णभूमयः क्रम्यन्तामिति ॥

सूतः ॥ यथाज्ञापयसि ॥ इति निष्क्रान्तः ॥

॥ ततः प्रविशति विश्वामित्रः रामलक्ष्मणौच ॥

विश्वा० ॥ स्वगतं ॥

रक्षोघ्नानि च मङ्गलानि सुदिने कल्प्यानि दारक्रिया
वैदेह्याश्च रघूद्वहस्य कुशलैर्दीक्षाप्रवेशश्च नः ।

आस्थाप्यानि च तानि तानि जगतां क्षेमाय रामात्मनो
दैत्यारेश्चरिताद्भुतान्यथ खलु व्यग्राः प्रमोदामहे ॥ ४ ॥

संदिष्टंच मैथिलस्य राजर्षेरस्माभिराचार इति यजमानोऽपि यज्ञे निमन्त्रितोऽसि कुशध्वजस्तु सीतोर्म्मिलाभ्यां सहितः प्रेषितव्य इति । कृतंच तत्प्रियेण सुहृदा ॥

कुमारौ ॥ भगवन्कः पुनरयं महात्मा यमत्रभवन्तोऽप्येवमभ्युन्नताः ।

विश्वा° ॥ श्रूयन्त एव निमिकुलसंभवा राजर्षयो विदेहेषु ।

तेषामिदानीं दायादो वृद्धः सीरध्वजो नृपः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ५ ॥

कुमा° ॥ यस्य तद्गृहेषु माहेश्वरं धनुः पूज्यते ॥

विश्वा° ॥ अथकिं ॥

कुमा° ॥ सकौतुकं ॥ अथ किलान्यदपि तत्राश्चर्य्यं । यदयोनिजा कन्यकेति ॥

विश्वा° ॥ विहस्य ॥ तदप्यस्ति ॥

अयं तु यजमानेन यक्ष्यमाणस्य मे गृहं ।
प्रेषितस्तेन वात्सल्यादनुजन्मा कुशध्वजः ॥ ६ ॥

तदस्मिन्राजश्रोत्रिये वत्साभ्यां प्रश्रयेण वर्त्तितव्यं ॥

कुमा° ॥ एवं ॥

राजा ॥ तौ निर्वर्ण्य ॥

प्रकृत्या पुण्यलक्ष्मीकौ कावेतौ ज्ञायते त्विदं ।
राजन्यदारकौ नूनं कृतोपनयनाविति ॥

द्वितीयस्य च वर्णस्य प्रथमस्याश्रमस्य च ।
अहो रम्यानयोर्मूर्त्तिर्वयसो नूतनस्य च ॥ ८ ॥

तथा हि ॥

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीं ।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्म्मुकमक्षसूत्रवलयं दण्डः परः पैप्पलः ॥ ९ ॥

कन्ये ॥ सोम्मदंसणा खु एदे ॥

राजा ॥ उपसृत्य ॥ भगवन्नभिवादये ॥

विश्वा° ॥ दिष्ट्या गर्भरूपकं त्वां कुशलिनमागतं राजर्षिगृहात्पश्यामि । तत्परिष्वजस्व ॥ आलिङ्ग्य ॥

अपि प्रवृत्तयज्ञोऽसौ विदेहाधिपतिः सुखी ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १० ॥

राजा ॥ नन्वार्य्यः स एकः सुखी सह पुरोधसा दैर्घतपसेन । यस्यैवं भवन्तः कुटुम्बवृत्तिमनुपतिताः ॥

कन्ये ॥ पणमामो ॥

राजा ॥ लाङ्गलोल्लिख्यमानाया यज्ञभूमेः सुनिर्गता ।
सीतेयमूर्म्मिला चेयं द्वितीया जनकात्मजा ॥ ११ ॥

विश्वा° ॥ भद्रमस्तु ॥

लक्ष्म° ॥ जनान्तिकं ॥ आश्चर्य्यमियमद्भुतसूतिरार्य्या ॥

रामः ॥ उत्पत्तिर्देवयजनाद्ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्त्तिरस्याः स्नेहं करोति मे ॥ १२ ॥

राजा ॥ भगवन् ।

कौ त्वामनुगतावेतौ क्षत्रियब्रह्मचारिणौ ।
प्रतापविक्रमौ धर्म्मं पुरस्कृत्योद्गताविव ॥ १३ ॥

विश्वा० ॥ रामलक्ष्मणौ दाशरथी ॥

कुमा० ॥ सविनयमुपसृत्य ॥ गुरो । अभिवादयावहे ॥

राजा ॥ दिष्ट्या महाराजदशरथप्रसूतिर्दृश्यते ॥ परिष्वज्य ॥

नान्यत्र राघवाद्वंशात्प्रसूतिर्वत्सयोः क्षमा ।
दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः ॥ १४ ॥

श्रुतपूर्वं ह्येतदस्माभिः कर्णामृतं ॥

प्राप्ताः कृच्छ्राद्दृश्यशृङ्गोपचारैः
पुण्यश्रीकाः कोशलेन्द्रेण पुत्राः ।
ये दीप्तस्य श्रेयसः पारकामा
श्चत्वारोऽपि ब्रह्मचर्य्यं चरन्ति ॥ १५ ॥

तदत्रभवता निष्पन्नाशिषा काममरिष्टतातिमाशास्महे । सिद्ध एव तु रघूणां प्रसूतेरुत्कर्षः । —

यान्मैत्रावरुणिः प्रशास्ति भगवानाम्नायपूते विधौ
शश्वद्येषु विशामनन्यविषयो रक्षाधिकारः स्थितः ।
सावित्रस्य मनोर्महीयसि कुले तेषामवाप्तात्मनां
राज्ञां वो महिमा न जातु वचनप्रज्ञानयोर्गोचरः ॥ १६ ॥

विश्वा० ॥

अश्रान्तपुण्यकर्म्माणः पावनप्रायकीर्त्तयः ।
माहाभाग्यविदस्तेषां यूयमेव स्तवक्षमाः ॥ १७ ॥

सखे विश्रम्य लौकिकाः संस्त्यायाननुप्रविशन्ति तदस्मिन्वि-कङ्कतप्रच्छाये मुहूर्त्तमास्महे ॥ इति सर्व्वे परिक्रम्योपविशन्ति ॥

॥ नेपथ्ये ॥

जय जय जगत्पते रामचन्द्र जय ॥

॥ सर्व्वे साद्भुतमवलोकयन्ति ॥

राजा ॥ भगवन्का पुनरियं देवता ॥

विश्वा० ॥ अस्त्यहल्या नाम गोतमस्य महर्षेरौतथ्यस्य धर्म्मपत्नी यस्याः शतानन्द आङ्गिरसोऽजायत । तामिन्द्रश्च-कमे । तस्मात्तं गोतमदारावस्कन्दिनमहल्याजार इति नि-र्दिशन्ति । अथ भगवान्मन्युमाप तस्यां पत्न्यामन्धतामिस्र-मभ्यध्यायत । सेयमद्य रामभद्रतेजसा तस्मादेनसो निरमु-च्यत ॥

राजा ॥ कथमप्रमेयसहजानुपमसामर्थ्य एष वत्सो वैक-र्त्तनकुमारः ॥

सीता ॥ सस्नेहानुरागं निर्वर्ण्य अपवार्य्यैव ॥ सरीरणिम्माणसरिसो णं से अणुभावो ॥

राजा ॥ निःश्वस्य ॥

रामाय पुण्यमहसे सदृशाय सीता
दत्तैव दाशरथिचन्द्रमसे भविष्यत् ।
आरोपणेन पणमप्रतिकार्य्यमार्य्य
स्त्रैयम्बकस्य धनुषो यदि नाकरिष्यत् ॥ १८ ॥

॥ प्रविश्य तापसः ॥

तापसः ॥ रावणपुरोहितः सर्वमायो नाम वृद्धराक्षसः प्राप्तः । स किल राजकार्य्यार्थः पश्यति ॥

कन्ये ॥ हुं रक्खसो ॥

कुमा० ॥ महत्कौतुकस्थानं ॥

राजविश्वामित्रौ ॥ विमृश्य ॥ आः । आगच्छतु ॥

॥ तापसो निष्क्रान्तः । प्रविश्य राक्षसः ॥

राक्ष० ॥ मातामहेन प्रतिषिध्यमानः
स्वयंग्रहान्माल्यवता दशास्यः ।
अयोनिजां राजसुतां वरीतुं
मां प्राहिणोन्मैथिलराजधानीं ॥ १९ ॥

दृष्टश्च तत्र यजमानः स राजा । तद्वचनात्कौशिककुशध्वजावनुसृतोऽस्मि ॥

॥ इति परिक्रामति ॥

रामलक्ष्मणौ ॥ सीतोर्म्मिले प्रति यथासंख्यं । आत्मगतं ॥ तत्किमियममृतवर्त्तिरिव चक्षुराप्याययति ॥

सीतोर्म्मिले ॥ तथैव तौ प्रति ॥ किंत्ति सज्जइ इमस्सिं लोअणाणन्दे मे दिट्ठी ॥

राक्ष० ॥ उपसृत्य दृष्ट्वा च ॥ इयं साद्भुताकृतिः सीता । स्थाने देवस्य पत्नी ॥ ऋषे नमस्ते । अप्यनामयं राज्ञः ॥

तौ ॥ स्वागतं । इहास्यतां ॥

अपि प्रभोर्वः कुशलं तस्य यस्यार्च्चयत्यसौ ।
मूर्द्ध्ना स्खलत्किरीटेन शासनं पाकशासनः ॥ २० ॥

राक्ष° ॥ उपसृत्य ॥ कुशलं स्वामिनः । संदिष्टंच वो महाराजेन ।

कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
रत्नं चेत्क्कचिदस्ति तत्परिणमत्यस्मासु शक्रादपि ।
कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं
बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च संबन्धिनः ॥ २१ ॥

सीता ॥ हद्धी हद्धी रक्खसो मं पत्थेदि ॥

ऊर्म्मिला ॥ कहं एव्वं ॥

॥ राजविश्वामित्रौ चिन्तयतः ॥

लक्ष्म° ॥ जनान्तिकं ॥ आर्य्य आर्य्य । किं न पश्यसि निशाचरपतिर्देवीमिमां प्रार्थयते ॥

रामः ॥ वत्स ॥

साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते ।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः ॥ २२ ॥

लक्ष्म° ॥ अतिसौजन्यादार्य्यस्य तस्मिन्नपि निसर्गवैरिणि निशाचरे बहुमानः ।

यो नस्त्रयीपरिध्वंसात्क्षात्रं तेजोऽपकर्षति ।
ऐक्ष्वाकं यश्च राजर्षिमनरण्यं किलावधीत् ॥ २३ ॥

रामः ॥ कामं शत्रुरिति वध्यः स्यान्न पुनरप्रमेयतपसमतिवीरमप्राकृतं प्राकृतवदर्हसि व्यपदेष्टुं ॥

लक्ष्म० ॥ निरस्तवीरपुरुषाचारस्य का तत्र वीरता ॥

रामः ॥ वत्स मा मैवं ।

यद्विद्वानपि तादृशेऽप्यभिजने धर्म्यात्पथो विच्युतः
किं ब्रूमोऽत्र तदन्यदेव न वसन्त्येकत्र सर्वे गुणाः ।
लीलानिर्जितषण्मुखाद्भगवतः श्रीजामदग्न्यादृते
निर्विघ्नप्रतिपन्नविश्वविजयो वीरस्तु कस्तादृशः ॥ २४ ॥

राक्ष० ॥ ननु भोः किमत्र चिन्त्यते ॥

द्राङ्निष्पेषविशीर्णवज्रशकलप्रत्युप्तरूढव्रण
ग्रन्थ्युद्भासिनि भग्नमोघमघवन्मातङ्गदन्तोद्यमे ।
भर्त्तुर्नन्दनदेवताविरचितस्रग्दाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु ॥ २५ ॥

॥ नेपथ्ये कलकलः ॥

राजा ॥ भगवन् । य एते यज्ञोपनिमन्त्रिताः पुत्रदारैः सह दिग्भ्यो महर्षयः संपतन्ति । तत एवाक्रान्दकलिलः कलकलः ॥

॥ सर्वे उत्तिष्ठन्ति ॥

लक्ष्म० ॥ का पुनरियं ।

अन्त्रप्रोतवृहत्कपालनलकक्रूरक्वणत्कङ्कण
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरं ।
पीतोच्छर्द्दितरक्तकर्द्दमघनप्राग्भारघोरोल्लल
द्व्यालोलस्तनभारभैरववपुर्बन्धोद्धतं धावति ॥ २६ ॥

विश्वा० ॥ सेयं सुकेतोर्दुहिता भार्य्या सुन्दासुरस्यच ।
मरीचज़ननी घोरा ताटका नाम राक्षसी ॥ २७ ॥

कन्ये॥ ताद ताद भीसणा हदासा॥
राजा॥ मा भैष्टमायुष्मन्त्यौ॥
विश्वा॰ ॥ रामं चिवुके स्पृशन्॥ वत्स हन्यतामियं॥
सीता॥ हद्धी हद्धी एसो एव्व एत्थ णिउत्तो॥
रामः॥ भगवन्स्त्री खल्वियं॥
ऊर्म्मि॰॥ सुदं अज्जाए एदं॥
सीता॥ सविस्मयानुरागं॥ अस्सदो मुहो एव्व से चित्तभेदो॥
राजा॥ साधु सत्यमैक्ष्वाको रामभद्रः॥
राक्ष॰॥ अयं स रामो दाशरथिः। य एष

उत्तालताटकोत्पातदर्शनेऽप्यप्रकम्पितः।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सते॥ २८॥

विश्वा॰॥ त्वरतां वत्सः। किं न पश्यसि ब्राह्मणजनस्य महतः संघातमृत्युमग्रतः॥
रामः॥ एवं भवन्तो जानन्ति।

सर्वदोषानभिष्वङ्गादाम्नायसमतां गताः।
युष्माकमभ्युपगमाः प्रमाणं पुण्यपापयोः॥ २९॥

॥ इति परिक्रम्य निष्क्रान्तः॥

सीता॥ अम्मो परागदो एव्व। हद्धी हद्धी। उप्पादवादाली विअ हदासा महाणुभावं अभिद्दवइ॥
राजा॥ धनुरास्फाल्य॥ आः पापे तिष्ठ तिष्ठ॥
ऊर्म्मि॰॥ अए। दाणिं सअं एव्व तादो पत्थिदो॥
लक्ष्म॰। विहस्य॥ पश्यन्तु भवन्तस्ताटकां।

हृन्मर्म्मभेदिपतदुत्कटकङ्कपत्र
संवेगतत्क्षणकृतस्फुरदङ्गभङ्गा ।
नासाकुटीरकुहरद्वयतुल्यनिर्य
द्बुद्बुदध्वनदसृक्प्रसरा मृतैव ॥ ३० ॥

कन्ये ॥ अच्छरिअं अच्छरिअं । पिअं णो ॥

राजा ॥ अहो दृढप्रहारिता राजपुत्रस्य ॥

राक्ष० ॥ हा आर्य्ये ताटके किं हि नामैतत् । अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्त इति ॥

नन्वद्य राक्षसपतेः स्खलितः प्रतापः
प्राप्तो नवः परिभवोऽद्य मनुष्यपोतात् ।
दृष्टः स्थितेन च मया स्वजनप्रमारो
दैन्यं जराच निरुणद्धि कथं करोमि ॥ ३१ ॥

विश्वा० ॥ एष तावदोंकारः ॥

राक्ष० ॥ अपि भोः किमस्मासु वः प्रतिवचनं ॥

विश्वा० ॥

अत्र सीरध्वजो वेत्ता कनिष्ठो हि कुशध्वजः ।
अस्याः पिता हि कन्यायाः कुले ज्येष्ठः प्रभुश्च सः ॥ ३२ ॥

राक्ष० ॥ सोऽप्याह कुशध्वजो जानाति विश्वामित्रश्चेति ॥

विश्वा० ॥ स्वगतं ॥ अस्यायमवसरो दिव्यास्त्रमङ्गलानां दानस्य । वर्त्ततेच मङ्गल्यो मुहूर्त्तः ॥

प्रकाशं ॥ सखे कुशध्वज । मया हि भगवतः कृशाश्वाद्गुरुचर्य्याव्रतैरधिगतस्य सरहस्यजम्भकप्रयोगसंहरणस्य दिव्यास्त्र-

मन्त्रपारायणस्य विद्यातत्ववीजानि तत्प्रसादादर्थतश्च शब्द-तश्च रामभद्रस्य संप्रति प्रकाशन्तां॥

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परः सहस्राः शरदस्तपांसि।
एतान्यदर्शन्मुनयः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ ३३ ॥

राजा॥ अनुगृहीतं रघुकुलं॥

लक्ष्म॰॥ दिष्ट्या देवदुन्दुभिध्वनिः पुष्पवृष्टिश्च॥

राक्ष॰॥ आः। दिवौकसोऽपि राजविरुद्धमनुमोदन्ते॥

लक्ष्म॰ ॥ कथं ॥

झटित्येवोत्तप्तद्रुतकनकसिक्ता इव दिशः
पिशङ्गत्वात्संध्यान्तरित इव निर्भाति दिवसः।
ज्वलत्केतुव्रातस्थगितमिव दिव्यास्त्रनिचयै
र्नभो नैरन्तर्य्यप्रचलिततडित्पिञ्जरमिव ॥ ३४ ॥

तेजोभिर्दिशिदिशि विश्वतः प्रदीप्तै
रादित्यद्युतिमवधीर्य्य विस्फुरद्भिः।
पर्य्यायत्वरितगृहीतविप्रयुक्तं
सामर्थ्यं रहयति नायनो मयूखः ॥ ३५ ॥

कन्ये॥ समन्तदो पज्जलिदविज्जुप्पुञ्जपिञ्जरेण उक्कमन्ति विअ लोअणाइं पहावणिप्फंदेण॥

राक्ष॰॥ अहो दुरासदं दिव्यास्त्रतेजः। स्त्यायता येन रावण-पुरन्दरद्वन्द्वसंरम्भं स्मारितोऽस्मि॥

सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वस्र
स्तत्संघट्टाद्विघटितवृहत्खण्डमुच्चण्डरोचिः ।
एवं वेगात्कुलिशमकरोद्व्योम विद्युत्सहस्रै
र्भर्तुर्वक्त्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥ ३६ ॥

विश्वा° ॥ अभिवन्दस्व विसर्ज्जयच रामभद्र दिव्यास्त्राणि ॥

ब्रह्मेन्द्रद्रविणेशरुद्रवरुणप्राचीनवर्हिर्मरु
त्कालाग्निव्यतिरेकिणां भगवतामाम्नायमन्त्रात्मनां ।
एतेषां तपसामिवाप्रतिरथैस्तेजोभिरुत्कर्षिणा
मेकैकस्य जगत्त्रयप्रमथनत्राणावधिर्योग्यता ॥ ३७ ॥

॥ नेपथ्ये ॥

एव प्रह्वोऽस्मि भगवन्नेषा विज्ञापना च नः ।
दिव्यास्त्रसंप्रदायोऽयं लक्ष्मणेन सहास्तु मे ॥ ३८ ॥

विश्वा° ॥ रामभद्र एवमस्तु ॥

लक्ष्म° ॥ अहो प्रसादः ॥

झटित्युन्मीलितप्रज्ञमप्रतर्क्यै शक्तिभिः ।
ज्योतिर्मयमिवात्मानं मन्ये विद्याप्रकाशनात् ॥ ३९ ॥

॥ नेपथ्ये ॥

राम राम महावाहो वयं त्वय्यायतामहे ।
विश्वामित्राभ्यनुज्ञानात्सह भ्रात्रा प्रशाधि नः ॥ ४० ॥

कन्ये ॥ देवदाओ मन्तेन्ति । अहो अच्छरिअं अच्छरिअं ॥

॥ नेपथ्ये ॥

भगवन्तो दिव्यास्त्रनिकायाः ॥

विश्वामित्रात्प्राप्य विश्वस्य मित्रा
त्पुण्यैर्युष्मानद्य रामः कृतार्थः।
ध्यातैर्ध्यातैः संनिधेयं भवद्भिः
स्वं स्वं स्थानं यात यूयं नमो वः ॥४१॥

लक्ष्म॰ ॥ आर्य्यवचनादन्तरितान्यस्त्राणि ॥

राजा ॥ भगवन्महाद्भुतनिधे कुशिकनन्दन नमस्ते ॥

ज्वलिततपसस्तेजोराशेर्जगत्यमितौजस
स्तव निरवधौ माहाभाग्ये कृतस्तुतिसाहसः।
प्रमितविषयां शक्तिं विन्दन्न वाचि न चेतसि
प्रतिहतपरिस्पन्दस्तोता विषद्य घृणीयते ॥४२॥

यतः स्पृहयामि युष्मदनुगृहीतरामभद्रालंकृताय राज्ञे दशरथाय ॥ वयं पुनरार्य्येण वञ्चिताः। यदीदृशेन जामात्रा न संयुज्यामहे ॥

विश्वा॰ ॥ किमद्याप्यसंभावनेयमस्मासु ॥

राजा ॥ शान्तं ॥

विश्वा॰ ॥ तेनहि।

शम्भोर्वरादनुध्यानमात्रोपस्थानदायि वः।
रामभद्रस्य पुरतः प्रादुर्भवतु तद्धनुः ॥४३॥

राजा ॥ एवमस्तु ॥ ध्यात्वा प्रणमति ॥

राक्ष॰ ॥ स्वगतं ॥ एभिरन्यदेव किमपि प्रस्तुतं ॥ प्रकाशं ॥ भोः कुशध्वज। कियच्चिरं विचार्य्यते ॥

राजा ॥ उक्तमेतत्। आर्य्यो जानातीति ॥

राक्ष० ॥ प्रत्युक्तमेतत् । सोऽप्याह कुशध्वजो जानातीति ॥

राजा ॥ एवमेतत् । कुशध्वजो जानातीति ॥

राक्ष० ॥ नेपथ्ये कलकलानन्तरं ॥

स्फूर्ज्जद्वज्रसहस्रनिर्म्मितमिव प्रादुर्भवत्यग्रतो ।

रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ॥ ४४ ॥

सीता ॥ अपवार्य्य ॥ संपदं संसइदम्हि ॥

विश्वा० ॥ राजानं प्रति ॥ शुण्डारः कलभेन यद्वदचले वत्सेन दोर्द्दण्डकस्तस्मिन्नाहित एव ॥

ऊर्म्मि० ॥ अपि णाम एव्वं भवे ॥

राजा ॥ गर्ज्जितगुणं कृष्टंच ॥

ऊर्म्मि० ॥ हृष्टां लज्जितां सीतामालिङ्ग्य ॥ दिट्ठिआ वट्ठामो ॥

राजा ॥ साद्भुतं ॥ भग्नंच तत् ॥

राक्ष० ॥ स्वगतं ॥ अहो दुरात्मनो रामहतकस्य सर्व्वंकषः प्रभावः ॥

लक्ष्म० ॥

दोर्लीलाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत

ष्टंकारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः ।

द्राक्पर्य्यासकपालसंपुटमितब्रह्माण्डभाण्डोदर

भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ ४५ ॥

राजा ॥ सहर्षोन्मादमिव ॥

एह्येहि वत्स रघुनन्दन रामचन्द्र

चुम्बामि मूर्द्धनि चिराय परिष्वजे त्वां ।

आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥ ४६ ॥

॥ प्रविश्य रामः ॥

कथमतिवत्सल्यादतिक्रमोऽपि ॥

विश्वा° ॥ गुरुर्भवानार्भरूपश्च ते वत्सो रामभद्रः ॥

राजा ॥ तं प्रणम्य ॥ भगवन् ॥

रामेण पत्या सीतायाः पूर्णास्ता युष्मदाशिषः
अस्मिन्नेवोत्सवे दत्ता लक्ष्मणाय मयोर्म्मिला ॥ ४७ ॥

कन्ये ॥ सास्रं ॥ अम्महे दिस्सम्ह ॥

राक्ष° ॥ स्वगतं ॥ हृष्टं द्रष्टव्यं ॥

विश्वा° ॥ सुष्ठु शिरसा बहुमन्यामहे । वक्तव्यशेषस्त्वसि ॥

राजा ॥ नन्वाज्ञापय ॥

विश्वा° ॥ दुहितरौ ते माण्डवी श्रुतकीर्त्तिश्च भरतशत्रुघ्नाभ्यामर्थये ॥

राक्ष° ॥ स्वगतं ॥ पश्यत वनेचरस्य सतः क्षत्रिये कुटुम्बवैयात्यं ब्राह्मणस्य ॥

राजा ॥ भगवन् । किमत्र किंचिद्विचार्य्यमस्ति । किंत्वत्र वस्तुनि परवानस्मि ॥

विश्वा° ॥ केन ॥

राजा ॥ एतेन तावद्भगवतैव ॥

विश्वा° ॥ अथान्येन केन ॥

राजा ॥ आर्य्यसीरध्वजेन गौतमेन शतानन्देनच ॥

विश्वा॰ ॥ उपहसन् ॥ सीरध्वजशतानन्दयोरहं विवेक्ता ॥

राजा ॥ भगवानिदानीं जानाति ।

जानकानां रघूणांच संवन्धः कस्य न प्रियः ।

यत्र दाता गृहीताच कल्याणप्रकृतिर्भवान् ॥ ४८ ॥

विश्वा॰ ॥ वत्स शुनःशेप । अयोध्यां गत्वा ब्रूहि भगवन्तमस्मद्वचनाद्वसिष्ठं ॥

एताश्चतुर्भ्यो रघुनन्दनेभ्यो
निमेर्गृहे राजसुताश्चतस्रः ।
वसिष्ठवद्गौतमवच्च भूत्वा
दत्तप्रतिष्ठाश्च समं मयैव ॥ ४९ ॥

तदुपनिमन्त्य सर्वान्महर्षीन्महाराजदशरथस्यानुपातो वैदेहनगरमागच्छ । तदा मम मैथिलस्य च राज्ञो यज्ञसमाप्तौ विततगोदानमङ्गलाः कुमाराः परिणेष्यन्तीति ॥

कुमा॰ ॥ स्वगतं ॥ प्रियात्प्रियतरं नः ॥

कन्ये ॥ दिट्ठिआ । अविप्पवासो दाणिं भट्टाणआणं भविस्सदि ॥

राक्ष॰ ॥ अद्यापि भोः शृणुत धर्म्माक्षरं । अनर्थ एव वो यत्कन्येयमन्यस्मै दीयत इति ॥

पौलस्त्योऽपि नयेन याचत इति श्लाघ्येऽपि वो नादरः
संवन्धे सति यत्त्रिलोकपतिना सौख्यं न तत्र स्पृहा ।
गन्तव्या पुनरन्यथैव नियतं लङ्कापि नः सीतया
तन्माभूदिह वः पुरन्दरपुरीवन्दिप्रसक्तो विधिः ॥ ५० ॥

॥ नेपथ्ये कलकलः ॥

राजा ॥ तत्कावेतावकालपर्ज्जन्यभीमौ वृन्देन धावतः ॥

विश्वा० ॥ एतौ सुबाहुमारीचौ पुत्रौ सुन्दोपसुन्दयोः ।
रावणानुचरौ घोरौ यज्ञप्रत्यूहकारिणौ ॥ ५१ ॥

तद्वत्सौ रामलक्ष्मणौ हन्यतामेष यज्ञप्रत्यूहः ।

तौ ॥ यथाज्ञापयसि ॥ इति विकटं परिक्रामतः ॥

कन्ये ॥ एत्थ दाणिं कहं ॥

राक्ष० ॥ हन्त साध्विव संपन्नं विपर्यस्तो विधिर्भवेत् ।
तद्वीक्ष्य कार्य्यपर्यन्तं माल्यवत्युपवेदये ॥ ५२ ॥

राजा ॥ धनुरास्फालयन् ॥ वत्स रामभद्र वत्स लक्ष्मण । अप्रमत्तः प्रमत्तं विजयस्व । अयमहं परागत एव ॥

विश्वा० ॥ विहस्य सहस्तग्राहं ॥

राजन्नितो ह्येहि सहानुजस्य
रामस्य पश्याप्रतिमानमोजः ।
ब्रह्मद्विषो ह्येष हिनस्ति सर्व्वा
नाथर्वणस्तीव्र इवाभिचारः ॥ ५३ ॥

॥ इति निष्क्रान्ताः सर्व्वे ॥

---

## ॥ कौमारो नाम प्रथमोऽङ्कः ॥

---

॥ ततः प्रविशत्युपविष्टः सचिन्तो माल्यवान् ॥

माल्य० ॥ भो यतःप्रभृति सर्व्वमायात्सिद्धाश्रमवृत्तान्तमशेषं ततश्चारभ्य

दूराद्दवीयो धरणीधराभं
यस्ताटकेयं तृणवद्व्यधूनोत्।
हन्ता सुबाहोरपि ताटकारिः
स राजपुत्रो हृदि बाधते मां ॥ १॥

तदनुप्रवानांच भूयसां क्षणेनैकेन वध इति किमेतदाश्चर्य्यं।

वीर्य्योत्कर्षैर्यदमृतभुजां निर्ममे पद्मयोनि
स्तस्य द्वैधं व्यधित धनुषः शाम्भवीयस्य रामः।
दिव्यास्त्रोपनिषदमृषेर्यः कृशाश्वस्य शिष्या
द्विश्वामित्राद्विजयजननीमप्रमेयः प्रपेदे ॥ २॥

प्रसह्य रावणाद्दिष्टमस्मद्धूतस्य पश्यतः।
अस्त्रदानाद्भुतं काले प्रौढेन मुनिना कृतं ॥ ३॥

यतः।

सीतावन्दिग्रहपरिभवस्तस्य राज्ञो निरस्तो
नीतं चास्मान्प्रति शिथिलतामैकमुख्यं सुराणां।
नान्दीनादप्रभृति हि कृतं मङ्गलं तैस्तदानीं
सर्व्वं प्रायो भजति विकृतिं भिद्यमाने प्रतापे ॥ ४॥

कथं वत्सा शूर्पणखा प्राप्ता॥

॥ प्रविश्य शूर्प्पणखा ॥

शूर्प्प॰ ॥ जेदु जेदु मादामहो ॥

माल्य॰ ॥ वत्से । आस्यतां । का राजसंनिधौ वार्त्ता ॥

शूर्प्प॰ ॥ णिवुत्ताइं किल तहिं पाणिग्गहणाइं । अस्संच । अगत्थिमहेसिणा रामस्स मंगलोवहारिअं माहिंदं धणुवरं अणुप्पेसिदं ॥

माल्य॰ ॥ यानि भुवनेष्वतर्क्यसामर्थ्यान्यायुधानि तानि रामे ब्रह्मर्षिभ्यो परिणमन्ति ॥ सचिन्तं ॥

अमोघमस्त्रं क्षत्रस्य ब्राह्मणानामनुग्रहः ।
दुरासदंच तत्तेजः क्षात्रं च ब्रह्मसंयुतं ॥ ५ ॥

शूर्प्प॰ ॥ माणुसमेत्तए वि एत्तिए का चिन्ता ॥

माल्य॰ ॥ वत्से मा मैवं ।

उत्पत्त्यैव हि राघवः किमपि तद्रूपो जगत्यद्भुतं
मर्त्यत्वेन किमत्र यस्य चरितं देवासुरैर्गीयते ।
वस्तुष्वादधते च शक्तिमृषयो देवाश्च तर्क्कोत्तरा
मर्त्या देववरप्रदानसमये ब्रह्माभयं नो जगौ ॥ ६ ॥

अपिच ।

निसर्गेण स धर्म्मस्य गोप्ता धर्म्मद्रुहो वयं ।
अर्थ्यो विरोधः शक्तेन जातो नः प्रतियोगिना ॥ ७ ॥

शूर्प्प॰ ॥ को संदेहो । जह दसमुहो इसिमउलिएहिं विंस-
दिट्ठीहिं ओहीरमाणलोललोअणो णमन्तवदणो वट्टदि ।

तह जाणान्ति दारुणो से हिअअवेअणावेओ ण एव्वं विरमि-स्सदित्ति ॥

माल्य° ॥ अहो न खलु भोः ।

वन्द्या विश्वसृजो युगादिगुरवः स्वायंभुवाः सप्त ये
वैदेहस्य वयंच तेच किमहो संबन्धिनो न प्रियाः ।
तन्नाम्नास्तु दुरासदेन तपसा दीप्तस्य दीप्तश्रियः
पौलस्त्यस्य जगत्पतेरपि कथं जाता हृदि न्यूनता ॥ ८ ॥

अथवा ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षंच परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते ॥ ९ ॥

॥ नेपथ्यार्द्धप्रविष्टः प्रतीहारः ॥

यः परशुरामस्य युष्माभिर्वार्त्ताहारः प्रहितः । तेनेदं तमालर-सविन्यस्ताक्षरं तालीपत्रमुपनीतं ॥

॥ उपक्षिप्य निष्क्रान्तः ॥

माल्य° ॥ गृहीत्वा वाचयति ॥ स्वस्ति महेन्द्रद्वीपात्परशुरामो लङ्कायाममात्यं माल्यवन्तमभ्यर्हेति ॥

शूर्प्प° ॥ कहं पहुव्व दुस्सिलिट्ठक्कमं लिहदि ॥

माल्य° ॥ अत्रैव परममाहेश्वरं लङ्केश्वरमभिनन्द्य ब्रवीति । विदितमेतद्वो यदस्माभिर्दण्डकारण्यतीर्थोपासकेभ्यस्तपोधने-भ्यः प्रतिज्ञातमभयं । तत्र विराधदनुकबन्धप्रभृतयः केऽप्यभि-

चरन्तीति श्रुतं। तत्तान्प्रतिषिध्य सद्वृत्तिमस्मद्धितां च माहेश्वरप्रीतिमनुरुन्धन्तां भवन्तः।

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥ १० ॥

इति ॥

शूर्प्प॰ ॥ ईसिमसिणावट्ठम्भगम्भीरगमओ उवरणासो ॥

माल्य॰ ॥ अहो किमुच्यते। जामदग्न्यः खल्वसौ।

अभिजनतपोविद्यावीर्य्यक्रियातिशयैर्निजै
रुपचितशमः सर्व्वत्यागान्निरीहतया स्थितः।
व्यपदिशति नः शैवप्रीत्या कथंचिदनास्थया
प्रभुरिव पुनः कार्य्ये कार्य्ये भवत्यतिकर्क्कशः ॥ ११ ॥

॥ इति चिन्तयति ॥

शूर्प्प॰ ॥ किं किं चिन्तीअदि ॥

माल्य॰ ॥ वत्से।

यदि प्रपद्येत धनुःप्रमाथः
शिष्याय शम्भोर्न तितिक्षते सः।
आयोधने चेदुभयोर्निघातः
संरम्भयोगादति हि प्रियं नः ॥ १२ ॥

अन्यतरविजयेऽपि तु क्षत्रियान्तकरश्चेद्राजपुत्रं विजयते नैनमनभिहत्य रोषणो विरमेत्। एवं च सिद्धं नः समीहितं रामनिधनं। ऐक्ष्वाकस्तु विजयमानो ब्राह्मण्यो न ब्रह्मर्षिम-

भिहन्यात्। निःश्रेयसापन्ने ऽपसृतमपि शस्त्रं प्रणिदध्यात्।
एवं च दुष्टतरं स्यात्॥

शूर्प्प॰॥ को विसेसो॥

माल्य॰॥ यदि जामदग्न्यस्तावदरण्यगतो हन्याद्राघवं हत्वापि पुनस्तादृश एव। संधार्य्यस्तु राजपुत्रः पुनरुत्थातुकामस्तं चेत्प्रहृष्टतममुत्साहशक्तिसंपदा धर्म्मविजयिनं विजयेत सर्व्वे तं विजयिनं निर्जानीयुः। तदैव हठाक्रामत्यनिभृतक्रुद्धा देवाः प्रसह्यैनमधिकुर्य्युः। नित्यानुषक्तो ह्यसुरविजयिनामवसादस्तदानतः प्रकृतिकोपः॥

पौलस्त्यापचयप्रचण्डचरिते यः कार्त्तवीर्य्ये मुनिः
सर्व्वक्षत्रकथासमापनविधेः प्राङ्मण्डलं प्राकरोत्।
तस्मिन्नप्युपनीतयुक्तदमनः स्यादुज्झिताऽसत्क्रिये
सामर्थ्ये सति धर्म्यसौम्यचरितो विश्वस्य रामः पतिः॥ १३॥

शूर्प्प॰॥ तदो एत्थ किं दाणिं चिन्तिदं॥

माल्य॰॥ परशुरामोत्तेजनं कर्त्तव्यमिति॥

शूर्प्प॰॥ पक्खन्तरे महादोसो॥

माल्य॰॥ तत्रापि शक्तितः प्रतिविधास्यते। किंतु।

तान्येव यदि भूतानि ता एव यदि शक्तयः।
ततः परशुरामस्य न प्रतीमः पराभवं॥ १४॥

तदुत्तिष्ठ मिथिलाप्रस्थानाय जामदग्न्यमुत्तेजयितुं महेन्द्रद्वीपमेव गच्छावः। द्रष्टव्यश्च तत्र भगवान्भार्ग्गवः।

गभीरो माहात्म्यात्प्रथमशुचिरत्यन्तसुजनः
प्रसन्नः पुण्यानां प्रचय इव सर्व्वस्य सुखदः ।
प्रभुत्वस्योत्कर्षात्परिणतिविशुद्धेश्च तपसा
मसौ दृष्टः सत्त्वं प्रबलयति पापं च नुदति ॥ १५ ॥

॥ उत्थाय परिक्रम्य निष्क्रान्तौ ॥

॥ विष्कम्भकः ॥

॥ नेपथ्ये ॥

भो भो विदेहनगरीगताः कुलचारिणः कथयन्तु भवन्तः कन्यान्तःपुरगताय रामभद्राय ।

कैलासोद्धारसारत्रिभुवनविजयौर्ज्जित्यनिष्णातदोष्णः
पौलस्त्यस्यापि हेलोपहतरणमदो दुर्दमः कार्त्तवीर्य्यः ।
यस्य क्रोधात्कुठारप्रविघटितमहास्कन्धबन्धः स्थवीयो
दोःशाखादण्डमुण्डस्तरुरिव विहितः कुल्यकन्दैः पराभूत् ॥ १६ ॥

सोऽयं त्रिःसप्तवारानविकलविहितक्षत्रतन्त्रप्रमाथो
वीरः क्रौञ्चस्य भेदात्कृतधरणितलापूर्व्वहंसावतारः ।
जेता हेरम्बभृङ्गिप्रमुखगणचमूचक्रिणस्तारकारे
स्त्वां पृच्छञ्जामदग्न्यः स्वगुरुहरधनुर्भङ्गरोषादुपैति ॥ १७ ॥

॥ ततः प्रविशति सधैर्य्यसंभ्रमो रामः सीता सख्यश्च ॥

रामः ॥ दिष्ट्या ॥

माहाभाग्यमहानिधिर्भगवतो देवस्य दग्धुः पुरा
माम्नायेन विशुद्धसर्व्वचारतः शिष्यो भृगूणां पतिः ।

द्रष्टव्यः स च मां दिदृक्षुरपि च त्यक्त्वा ह्रियं मुग्धया
संत्रासान्निजयाभिजात्यनिभृतस्नेहो मयि द्योत्यते ॥ १८ ॥

सीता ॥ हला सहीओ कहं दारिणं एदं ॥

सख्यः ॥ कुमार अलं दाव तुवराए ॥

रामः ॥ नोत्साहः परिधारणावैरस्यमर्हेति ॥

सख्यः ॥ वारं वारं णिक्खत्तीकदसमत्थजीअलोओ णि-
इडिदविसमववसाअसाहसो अ परसुरामो सुणीअदि ॥

रामः ॥ किमेकदेशेन महाज्ञाननिधेर्माहात्म्यमुपसंह्रि-
यते । य एषः ।

उत्खातक्षितिपालवंशगहनास्त्रिःसप्तकृत्वो दिशः
कृत्वा विश्रुतकार्त्तिकेयविजयश्लाघ्यस्य वाहोर्वलात् ।
सद्वीपामथ कश्यपाय गुरवे दत्त्वाश्वमेधे मही
मस्तव्यस्तसमुद्रमुक्तविषयावस्थस्तपस्तप्यते ॥ १९ ॥

॥ नेपथ्ये ॥

सत्त्वभ्रंशविषादिभिः कथमपि त्रस्तेक्षणं वेत्रिभि
र्दृष्ट्वा दृष्टिविघातजिह्मितमुखैरव्याहतप्रक्रमः ।
रामान्वेषणतत्परः परिजनैरुन्मुक्तहाहारवं
कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्ग्गवः ॥ २० ॥

रामः ॥ नन्वेत एव शिष्टाचारपद्धतेः प्रणेतारः । तत्कथ-
मयं विद्वान्प्रमाद्यति । भवतूपसर्प्पामि ॥ सधैर्य्यं विकटं परिक्रामति ॥

सख्यः ॥ अम्मो समन्तदो हा हा देव चंदमुह रामचन्द
हा जामाउअ त्ति परिदेवणामुहरकादरुव्विग्गसमत्थपरिअण-

पलविदं अन्तेउरं वट्टइ । ता भट्टिदारिए सत्रं एव्व विसवेहि भट्टिदारअं ॥

सीता ॥ तेण तुवरन्तीओ संभावेम्ह वेअपसरिअं अज्ज-उत्तं ॥

॥ इति परिक्रामति ॥

सख्यः ॥ कुमार कुमार । अवेक्ख दाव तुवराविसंखल-माणविहलिदुब्भन्तगमणं भट्टिदारिअं ॥

रामः ॥ सप्रेमानुकम्पं । प्रतिनिवृत्य ॥ ननु कातरेयमत्रभवतीभि-रेव पर्यवस्थापनीया ॥

सख्यः ॥ सहि सहि सुरासुरमहणसमत्थं त्तेल्लोक्कमङ्गलं तुंगजअलच्छीलछणमिमं सविब्भमविसदणेत्तकंदोट्टसोहाभ-रन्तमुहपुंडरीअवित्थारिदसिणेहसंभमा सव्वदा अम्ह पुरदो वणेसि ता किं त्ति विजआभिमुहे कुमारे उब्भन्तासि ॥

सीता ॥ सव्वक्खत्तिअसन्तापआरी परसुरामो त्ति ॥

रामः ॥ प्रिये स्वस्था सती निवर्त्तस्व ॥

आतङ्कश्रमसाहसव्यतिकरोत्कम्पः क्षणं सह्यता
मङ्गैर्मुग्धमधूकपुष्परुचिभिर्लावण्यसारैरयं ।
उन्नद्धस्तनकुम्भकुड्मलगुरुश्वासावभग्नस्य ते
मध्यस्य त्रिवलीतरङ्गकजुषो भङ्गः प्रिये मा च भूत् ॥ २१ ॥

॥ नेपथ्ये ॥

भो भोः परिस्कन्नाः क्व रामो दाशरथिः ॥

स्त्रियः ॥ हद्धी हद्धी । एणं एव्व एसो वाहरदि ॥

रामः ॥ तस्यायमनरालसाहसप्रचण्डकर्म्मणः प्रतिभिन्नपुष्करावर्त्तकस्तनितमांसलो वाङ्निर्घोषः कर्णविवरमाप्याययति ॥ इति परिक्रामति ॥

सीता ॥ का गदी। धनुषि धारयन्ती । अज्जउत्त ण दाव तुम्हेहिं गन्तव्वं । जाव तादो णागच्छदि ॥

सख्यः ॥ उव्वत्तिदं दाणिं पिअसहीए रसन्तरेण लज्जालुइत्तणं ॥

रामः ॥ स्वगतं ॥ जितं जितं स्नेहेन ॥ प्रकाशं ॥ तर्हि मुक्त्वा धनुर्गच्छामि ॥

॥ नेपथ्ये ॥

भो भोः परिस्कन्नाः क्व रामो दाशरथिः ॥

सीता ॥ तदो वलादेव धारइस्सं ॥

रामः ॥ हन्त ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्संगप्रियता च वीररभसोन्मादश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय
न्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥ २२ ॥

सख्यः ॥ एस दिप्पन्तदिणअरालोअपेछिज्जन्तमहापरिक्खेवभासुरं जलन्तं सुणिसिदं परसुं धारअन्तो विसंखलुब्बेल्लहुदवहसिहासहस्ससंहिदजडाभरो सुदूरविक्खेवाविद्धविअडोरुदण्डणिब्भराभिघादविहलाविदवसुंधरो परागदो ज्जेव्व सो सअलक्खत्तिअमहारक्खसो ॥

रामः ॥　अयं स भृगुनन्दनस्त्रिभुवनैकवीरो मुनि
यं एष निचयो महानिव दुरासदस्तेजसां ।
प्रतापतपसोरिव व्यतिकरः स्फुरन्मूर्त्तिमा
न्प्रचण्ड इव पिण्डतामुपगतश्च वीरो रसः ॥ २३ ॥

॥ सविस्मयं ॥

पुण्योऽपि भीमकर्म्मा निधिर्व्रतानां चकास्त्यमितशक्तिः ।
मूर्त्तिमभिरामघोरां बिभ्रदिवाथर्व्वणो निगमः ॥२४॥ अयं हि ।
कल्पापायप्रणयि दधतः कालरुद्रानलत्वं
संरब्धस्य त्रिपुरजयिनो देवदेवस्य तिग्मः ।
ब्रह्मच्छद्मा निखिलभुवनस्तोमनिर्मन्थयोग्यो
राशीभूतः पृथगिव समुत्थाय सामर्थ्यसारः ॥ २५ ॥
अहो स्वाच्छन्द्यवैचित्र्यमत्रभवतः ॥
ज्योतिर्ज्वालाप्रचयजटिलः संनिधत्ते कुठार
स्तूणीरोऽंसे वपुषि च जटाचापचीराजिनानि ।
पाणौ बाणः स्फुरति वलयीभूतलोलाक्षसूत्रे
वेषः शोभां व्यतिकरवतीमुग्रशान्तस्तनोति ॥ २६ ॥
प्रिये गुरुरयं तदपसृत्य कृतावगुण्ठना भव ॥
सीता ॥　हद्धी हद्धी । परागदो एव्व । अञ्जलिं बद्ध्वा । अज्जउत्त
परित्ताअसु मं पिअसाहसिअ पसीद ॥
रामः ॥　अपि प्रिये ।
मुनिरयमथ वीरस्तादृशस्तत्प्रियं मे
विरमतु परिकम्पः कातरे क्षत्रियासि ।

जगति विततकीर्त्तेर्दर्प्पकराडूलदोष्णः
परिसरणसमर्थो राघवः क्षत्रियोऽहं ॥ २७ ॥

॥ ततः प्रविशति क्रुद्धः परशुरामः ॥

जाम० ॥ अहो दुरात्मनः क्षत्रियवटोरनात्मज्ञता ।
न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दःस्कन्द इव प्रियोऽहमथवा शिष्यः कथं न श्रुतः ॥ २८ ॥
एष मे प्रशमस्य कर्क्कशपरिणामः ।

यत्क्षत्रियेष्वपि पुनःस्थितमाधिपत्यं
तैरेव संप्रति धृतानि पुनर्धनूंषि ।
उन्माद्यतां भुजवलेन मयापि कष्ट
मुच्छृङ्खलानि चरितानि पुनः श्रुतानि ॥ २९ ॥

रामः॥ अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधा
ववितथमदाध्माते रोषान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्प्पक्षमाय च कर्म्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥ ३० ॥

किंत्वविषयस्तावदाचारस्य ॥

जाम० ॥ भो भोः परिस्कन्नाः क्व रामो दाशरथिः ॥
रामः ॥ अयमहं भोः । इत इतो भवान् ॥
जाम० ॥ साधु राजपुत्र साधु । सत्यमैक्ष्वाकः खल्वसि ।

अन्विष्यतः प्रमथनाय ममापि दर्प्पा
दात्मानमर्प्पयसि जातिविशुद्धसत्त्वः ।
गन्धद्विपेन्द्रकलभः करिकुम्भकूट
कुट्टाकपाणिकुलिशस्य यथा मृगारेः ॥ ३१ ॥

स्त्रियः ॥ सन्तं पावं पडिहदममङ्गलं ॥

जाम० ॥ निर्वर्ण्य । स्वगतं ॥ रमणीयः क्षत्रियकुमार आसीत् ॥

चञ्चत्पञ्चशिखण्डमण्डलमसौ मुग्धप्रगल्भं शिशु
र्गम्भीरं च मनोहरं च सहजश्रीलक्ष्मरूपं दधत् ।
दृग्दृष्टोऽपि हरत्ययं मम मनः सौन्दर्य्यसारश्रिया
हन्तव्यस्तु तथापि नाम धिगहो वीरव्रतक्रूरतां ॥ ३२ ॥

॥ प्रकाशं ॥

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाक्रियाविर्भव
त्क्रोधप्रेरितभीमभार्गवभुजस्तंभापविद्धः क्षणं ।
स ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ ३३ ॥

स्त्रियः ॥ हद्धी हद्धी । पज्जलिदो खु सो ॥

रामः ॥ सधैर्य्यबहुमानकौतुकं निर्वर्ण्य ॥ अयं सः । यः किल पुरा सपरिवारकार्त्तिकेयविजयावर्ज्जितेन भगवता नीललोहितेन सहस्रपरिवत्सरान्तेवासिने तुभ्यं प्रसादीकृतः परशुः ॥

सख्यः ॥ भट्टिदारिए पेक्ख हिअअभरिअउव्वमन्तबहुमाणो णिक्कम्पधीरगरुअत्तणेण ओहसइ भअवओ भग्गवस्स आउहलम्भं भट्टिदारओ ॥

॥ सीता सविस्मयाहं पश्यति ॥

जाम० ॥ स्वगतं ॥ आश्चर्य्यमाश्चर्य्यं । अन्य एवायं प्रकारः । किमपिचैतदसंविज्ञानपदनिबन्धनं माहात्म्यं सौजन्यंच संरम्भगम्भीरधीरश्च पौरुषावष्टम्भः ॥ प्रकाशं ॥ राम दाशरथे स एवायमाचार्य्यपादानां प्रियः परशुः ॥

लक्ष्मः ॥ खणं जसन्तस्स विक्ष आलावो ॥

जाम० ॥ अस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतोऽपि जित एव मया कुमारः ।
एतावतापि परिरभ्य धृतप्रसादः
प्रादादिमं प्रियगुणो भगवान्गुरुर्मे ॥ ३४ ॥

रामः ॥ स्वगतं ॥ कथमेतावतापीत्याह । अहो गर्व्वगौरवस्याभोगः ॥ प्रकाशं ॥ अतश्च भगवन्दिवःपृथिव्योर्विततस्ते वीरवादः ।

येनैव खण्डपरशुर्भगवान्प्रचण्ड
श्चण्डीपतिस्त्रिभुवनेषु गुरुः प्ररूढः ।
तेनैव तारकरिपोर्विजयार्ज्जितेन
दीप्तिं गता परशुराम इति श्रुतिस्ते ॥ ३५ ॥

किंच ॥

उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरु
र्वीर्य्यं यत्तु न तद्गिरां पथि न तद्व्यक्तं हि तत्कर्म्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरं ॥ ३६ ॥

सख्यः ॥ जाणादि महाभाओ गरुअरमणिज्जं मन्तिदुं ॥

जाम° ॥ राम राम नयनाभिराम ता
माशयस्य सदृशी समुद्वहन् ।
अप्रतर्क्यगुणरामणीयकः
सर्व्वथैव हृदयंगमो ऽसि मे ॥ ३७ ॥

अपि च ॥

हेरम्बदन्तमुसलोल्लिखितैकभित्ति
वक्षो विशाखविशिखव्रणलाञ्छितं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभा
त्सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वां ॥ ३८ ॥

सख्यः ॥ भट्टिदारिए पेक्ख भट्टिणो सोहग्गं । तुमं खु णिच्चपरम्मुही अत्ताणअं वंचसि ॥

॥ सीता सास्रं निःश्वसिति ॥

रामः ॥ भगवन्परिरम्भणमिति प्रस्तुतप्रतीपमेतत् ॥

सख्यः ॥ धीरमसिणो अत्तणो माहप्पसोहिदो से विणओ ॥

जाम° ॥ स्वगतं ॥ अहो गुणपरगुणोत्कर्षत्वे परिणामग्राहि सौजन्यपूतमन्तःकरणमस्य राजन्यपोतस्य । पारमार्थिकविनयदुर्विभावस्तुतिनिपुणबुद्धिग्राह्यो महानहंकारः ।

अप्राकृतस्य चरितातिशयस्य भावै
रत्यद्भुतैर्मम हृतस्य तथाप्यनास्था ।
को ऽप्येष वीरशिशुकाकृतिरप्रमेय
माहात्म्यसारसमुदायमयः पदार्थः ॥ ३९ ॥

आश्चर्यं ।

संभाव्यमिष्टभुवनाभयदानपुण्य
संभारसस्य वपुरत्र हि विस्फुरन्ति ।
लक्ष्मीश्च सात्विकगुणज्वलितं च तेजो
धर्म्मश्च मानविजयौच पराक्रमश्च ॥ ४० ॥

अयं हि ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्म्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः संचयो वा गुणाना
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ४१ ॥

प्रकाशं ॥ हे भवत्यः प्रविशत्वियं वधूरभ्यन्तरमेव ॥

रामः ॥ स्वगतं ॥ एवमेव ॥

॥ नेपथ्ये ॥

सीरध्वजो धनुष्पाणिरित एवाभिवर्त्तते ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ ४२ ॥

सख्यः ॥ भट्टिदारिए परागदो एव्व तादो एहि अब्भन्तरं पविसम्ह ॥

सीता ॥ स्वगतं ॥ भअवदि संग्गामसिरि एसो दे अञ्जली ॥

॥ इति निष्क्रान्ताः स्त्रियः ॥

जाम० ॥ स एष राजा जनको मनीषी
पुरोहितेनाङ्गिरसेन गुप्तः ।
आदित्यशिष्यः किल याज्ञवल्क्यो
यस्मै मुनिर्ब्रह्म परं विवव्रे ॥ ४३ ॥

सद्वृत्त एषस्तथापि तु क्षत्रिय इति शिरः शूलमुत्कोपयति ॥

॥ ततः प्रविशतः संभ्रान्तौ जनकशतानन्दौ ॥

शता० ॥ राजन्किमत्र युक्तं ॥

जन० ॥ भगवन् । —

ऋषिरयमतिथिश्चेच्छिष्टरः पाद्यमर्घ्यं
तदनु च मधुपर्कः कल्पतां श्रोत्रियाय ।
अथ नु रिपुरकस्माद्द्वेष्टि नः पुत्रभाण्डे
तदिह नयविहीने कार्म्मुकस्याधिकारः ॥ ४४ ॥

॥ इति परिक्रामतः ॥

रामः ॥ तत्किमित्यतिवाष्पायितं भवता ॥

जाम० ॥ न किंचित् । —

संभूयैव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
स त्वं नूतन एव कङ्कणधरः श्रीमान्प्रियश्चेतसो
हन्तव्यः परिभूतवान्गुरुमिति प्रागेव हूयामहे ॥ ४५ ॥

रामः ॥ , भार्ग्गव ज्ञायते मामनुकम्पस इति ॥

जाम० ॥ अरे किमुत त्रातोऽसि ।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
कुठारः कान्तुकण्ठस्य कष्टं कण्ठं पतिष्यति ॥ ४६ ॥

रामः ॥ सत्यमेव करुणया प्रतिक्षिप्तोऽसि ॥

जाम० ॥ आः । मय्येव भृकुटिधरः संवृत्तः ॥ अरे क्षत्रियडिम्भ त्वं किल शिशुर्नववधूटिकापरिग्रह इत्यपूर्वमुपतप्यते ऽस्माभिः ॥

सुप्रसिद्धः प्रवादोऽयमिति हेति च गीयते ।
जामदग्न्यः स्वयं रामो मातुर्मूर्द्धानमाच्छिनत् ॥ ४७ ॥

अपिच रे मूढ ।

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसन्तानरोषा
दुद्दामस्यैकविंशत्यवधिविधमतः सर्वतो राजवंश्यान् ।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमानं
क्रोधाग्निं कुर्वतो मे न खलु न विदितः सर्वभूतैःस्वभावः ॥४८॥

रामः ॥ नृशंसता हि नाम तत्र पुरुषदोषःतत्र का विकत्थना ॥

जाम० ॥ आः क्षत्रियवटो । अति नाम प्रगल्भसे ।

प्रहर नमतु चापं प्राक्प्रहारप्रियोऽहं
मयि तु कृतनिघाते किं विदध्याःपरेण ।
धिगिति विगतवल्गुज्ञारभास्वत्कुठार
प्रविघटितकठोरस्कन्धवन्धः कबन्धः ॥ ४९ ॥

जनकशतानन्दौ ॥ वत्स रामभद्र विस्रब्धं तावदास्व ॥

रामः ॥ कष्टमनुज्ञानापेक्षः संवृत्तोऽस्मि ॥

जाम० ॥ अपि सुखमाङ्गिरसः ॥

शता० ॥ विशेषतस्त्वद्दर्शनात् । अपिच । त्वं नः पूज्यतमोऽतिथिर्यदि नुतः सज्जातिथेया वयं ॥

जाम० ॥ पुरोधः सुचरितवृत्तः श्रोत्रियो गृहमेधी याज्ञवल्क्यशिष्यः । तत्र सर्वं युज्यते किंतु नाहमातिथ्यकामः ॥

शता० ॥ कन्यान्तःपुरमक्रमात्प्रविशता संदूषिता नःस्थितिः॥

जाम० ॥ अरण्यवासी ब्राह्मणोऽहमनभिज्ञः परमेश्वरगृहाचारस्य ॥

रामः ॥ स्वगतं ॥ शोभत एव दत्तभुवनैकदक्षिणस्य सामन्तेष्वहंकारोत्रासः ॥

जन॰ ॥ पापं वाञ्छसि कर्म्म राघवशिशावस्मत्सनाथे कथं ॥

॥ प्रविश्य कञ्चुकी ॥

देव्यः कङ्कणमोचनाय मिलिता राजन्वरः प्रेष्यतां ॥

जनकशतानन्दौ ॥ वत्स रामभद्र श्वश्रूजनस्त्वामाह्वयति तद्गम्यतां ॥

रामः ॥ भगवञ्जामदग्न्य एवमादिशन्ति गुरवः ॥

जाम॰ ॥ को दोषः क्रियतां लोकधर्म्मः । पश्यन्तु च त्वां ज्ञातयः किंतु न चिरं जनपदेष्वारण्यकास्तिष्ठन्ति । गन्तुकामोऽस्मि । अतो न कालः परिक्षेप्तव्यः ॥

रामः ॥ एवं ॥

॥ प्रविश्य सुमन्त्रः ॥

भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्ग्गवानाह्वयतः ॥

इतरे ॥ क्व भगवन्तौ ॥

सुम॰ ॥ महाराजदशरथस्यान्तिके ॥

रामः ॥ गुरुवचनाद्गच्छामः ॥

॥ इति निष्क्रान्ताः सर्व्वे ॥

---

॥ परशुरामसंवादो नाम द्वितीयोऽङ्कः ॥ २ ॥

---

॥ ततः प्रविशतो वसिष्ठविश्वामित्रौ जामदग्न्यशतानन्दौ च ॥

वसिष्ठविश्वामित्रौ ॥ जामदग्न्य ।

इष्टापूर्त्तविधेः सपत्नशमनाच्छ्रेयान्मघोनः सखा
येन द्यौरिव वज्रिणा वसुमती वीरेण राजन्वती ।
यस्यैते वयमग्रतः किमपरं विश्वस्य वैवस्वतः
सोऽयं त्वां तनयप्रियः परिणतो राजाभयं याचते ॥ १ ॥

तद्वीर विरम शुष्ककलहात् । इदं त्वस्तु ॥

संज्ञप्यते वत्सतरी सर्प्पिष्यन्नं च पच्यते ।
श्रोत्रियः श्रोत्रियगृहानागतोऽसि जुषस्व नः ॥ २ ॥

जाम० ॥ अत्र वो विज्ञापयामि ॥ किंनु क्षमे यदि रामः प्रकृष्टवीर्य्यो न स्यात् । पश्यन्तु भवन्तः ।

रामः कर्म्मभिरद्भुतैः शिशुरपि ख्यातस्ततो भार्ग्गवः
कस्मात्प्राप्य तिरस्क्रियामसहनोऽप्यस्थादिति प्रस्तुते ।
को विद्यागुरुगौरवादिति भवेज्ज्ञातोऽपि वक्ता पुन
र्न त्वेवास्ति यथा स्थितस्य सुलभद्वेषं हि वीरव्रतं ॥ ३ ॥

अपिच ।

यशसि निरवकाशे विश्वतः श्वेतमाने
कथमपि वचनीयं प्राप्य यत्किंचिदेव ।
कृतविततिरकस्मात्प्राकृतैरुत्तमानां
विरमति न कथंचित्कश्मला किंवदन्ती ॥ ४ ॥

वसि॰ ॥ अयि वत्स किमनया यावज्जीवमायुधपिशाचिकया । श्रोत्रियोऽसि जामदग्न्य पूतं भजस्व पन्थानमारण्यकश्चासि तत्प्रचिनु प्रसादनीश्चतस्रो मैत्र्यादिभावनाः प्रसीदतु हि ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः । समापयतु परशुश्च । तत्प्रसादजमृतंभराभिधानमवहिःसाधनोपाधेयसर्व्वार्थसामर्थ्यमपविद्धविप्लवोपरागमूर्ज्जस्वलमन्तर्ज्योतिषो दर्शनं प्रज्ञानमभिसंभवति । तद्ध्याचरितव्यं ब्रह्मणेन तरति येन मृत्युं पाप्मानं । अन्यत्र चाभिनिविष्टोऽसि । पश्य ॥

परिषदियमृषीणामेष वृद्धो युधाजि
त्सह नृपतिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याचकस्ते ॥ ५ ॥

जाम॰ ॥ एवमेतत् । किंतु ।

शत्रुमूलमनुत्खाय न पुनर्द्रष्टुमुत्सहे ।
त्र्यम्बकं देवमाचार्य्यमाचार्य्यानीं च पार्व्वतीं ॥ ६ ॥

विश्वा॰ ॥ यदि गुरुष्वनुरुध्यसे चेतयस्व मामपि ततं । किंच ॥

हिरण्यगर्भाहषयो बभूवु
र्वसिष्ठभृग्वङ्गिरसस्त्रयो ये ।
सोऽयं वसिष्ठो भृगुनन्दनस्त्व
मयं हि तस्याङ्गिरसः प्रपौत्रः ॥ ७ ॥

जाम॰ ॥ प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतं ॥ ८ ॥

तथा हि ।

यतो विमुक्तेरपि मानरक्षणं
प्रियं निसर्गेण तथा च पश्य मे ।
सनाभयो यूयमयं च कर्कशः
शरासनज्याकिणलाञ्छनो भुजः ॥ ९ ॥

विश्वा० ॥ स्वगतं ॥

संपूजितं हि माहात्म्यमुज्झिरन्त्यः पदेपदे ।
अपि मर्मभिदो वाचः सत्यं विस्मापयन्ति मां ॥ १० ॥

जाम० ॥ अपि च भगवन्कुशिकनन्दन ।

ब्रह्मैकतानमनसो हि वसिष्ठमिश्रा
स्त्वं ब्रूहि वीरचरितेषु गुरुः पुराणः ।
वंशे विशुद्धिमति येन भृगोर्जनित्वा
शस्त्रं गृहीतमथ तस्य यदत्र युक्तं ॥ ११ ॥

वसि० ॥ स्वगतं ॥

कामं गुणैर्महानेष प्रकृत्या पुनरासुरः ।
उत्कर्षात्सर्वतो वृत्तेः सर्वाकारं हि दृप्यति ॥ १२ ॥

विश्वा० ॥ वत्स एतद्ब्रवीमि ।

एकव्यक्त्यपराधकोपविकृतस्त्वं क्षत्रजातेरपि
प्रागाधानन्निरन्वयप्रमथनादुच्छेदमेवाकरोः ।
त्रिःसप्तावधि विप्रशुक्रजमपि क्षत्रं तदेवोद्धर
न्वृद्धैः स्वैश्च्यवनादिभिर्नियमितः क्रोधाद्व्यरंसीरिति ॥ १३ ॥

जाम० ॥ व्यरंसिषमेव पितृवधप्रयुक्तात्क्षत्रवधमहाधिकारात् । किमत्र निह्नवः ।

परशुरशनिखण्डः क्षत्रघातं विहाय
प्रियमपि समिदिध्मव्रश्चनः किं न जातः।
निभृतविशिखदंष्ट्रश्चापदण्डोऽपि धत्ते
विगलितविषवह्नेः साम्यमाशीविषस्य ॥ १४ ॥
एवं मया नियमितश्च्यवनादिवाक्यैः
कोपानलश्च परशुश्च पुनर्यथा तैः।
कालेन पार्थिवकुलैः ककुभो महद्भि
र्दग्धोत्थितैरिव वनैर्गहनाः क्रियन्ते ॥ १५ ॥

निमित्तान्तरात्तु शीर्षच्छेद्यो राम इति। अथेदानीं।

एतस्य राघवशिशोः कृतचापलस्य
लूत्वा शिरो मयि वनाय पुनः प्रयाते।
स्वस्थाश्चिराय रघवो जनकाश्च सन्तु
मा भूत्पुनर्वत कथंचिदतिप्रसंगः ॥ १६ ॥

शता०॥ शक्तिरस्ति कस्यचिद्विदेहराजस्य राजर्षेर्याज्यस्य मे प्रेयसश्छायामप्यवस्कन्दितुं। किमङ्ग जामातरं ॥

वयमिह यथा गृह्यो वह्निस्तथैव चिरं स्थिताः
सुचरितगुरुस्तम्भाधारे गृहे गृहमेधिनः।
यदि परिभवस्तत्रान्यस्मादुपैति धिगस्तु नः
प्रियमपि ततो धिग्ब्राह्मण्यं धिगङ्गिरसः कुलं ॥ १७ ॥

विश्वा०॥ साधु वत्स गौतम साधु। कृतकृत्य एष राजा सीरध्वजस्त्वया पुरोहितेन।

न तस्य राज्यं व्यथते न भ्रश्यति न जीर्य्यति।
त्वं विद्वान्ब्राह्मणो यस्य राष्ट्रगोपः पुरोहितः ॥ १८ ॥

जाम॰ ॥ गौतम त्वयेव बहुभिः क्षत्रियपुरोहितैर्ब्रह्मतेजसा स्फुरितमासीत् किंतु प्राकृतानि तेजांस्यप्राकृते ज्योतिषि प्रशाम्यन्ति ॥

शता॰ ॥ सक्रोधं ॥ अरे अनड्वन् । निरपराधराजकुलकदनमहापातकिन् ॥ अशिष्टविकृतचेष्ट वीभत्सकर्म्मन् । अपूर्वपाखण्ड काण्डीरकाण्डपृष्ठ । कथमस्यामपि दिशि प्रगल्भसे ननु च रे त्वमसि किंब्राह्मण एव । अहो महाब्राह्मणस्याचारः ।

मातुरेव शिरश्छेदो गर्भाणां चापकर्त्तनं ।
राज्ञां च सवनस्थानां ब्रह्महत्यासमो वधः ॥ १९ ॥

जाम॰ ॥ आः स्वस्तिवाचनिक । दुष्ट दुष्ट सामन्तपुरोहित । अपिच रे अहल्यायाः पुत्र अहं तव काण्डपृष्ठः ॥

शता॰ ॥ आः दुष्ट दुर्मुख । भृगुप्रसवपांसन ।

राजानो गुरवश्चैते महिम्नैव महाक्षमाः ।
क्षमन्तां नाम न त्वेवं शतानन्दः क्षमिष्यते ॥ २० ॥

॥ इति कमण्डलूदकेनोपस्पृशति ॥

वसि॰ ॥ कः कोऽत्र भोः प्रसाद्यतां प्रसाद्यतां । अयं धवित्रनिर्द्धूत इवाग्निः प्रणीतपृषदाज्याभिघारघोरस्तनूनपात्समिध्यमानदारुणब्रह्मवर्च्चसज्योतिराङ्गिरसः ॥

शता॰ ॥ ससंरम्भं ॥ शापोदकं गृहीत्वा ॥ भो भोः सभासदः पश्यन्तु भवन्तः ।

सक्रोधः प्रसभमहं पराभिघाता
दुर्व्रूय द्रुततरमाततायिनं वः ।

उत्पातक्षुभितमरुद्विघट्यमानो
वज्राग्निर्द्रुममिव भस्मसात्करोमि ॥ २१ ॥

॥ नेपथ्ये ॥

प्रसीद भगवन् गृहानुपगते प्रशाम्यतु दुरासदं तपस्तेजः ।

श्लाघ्यो गुणैर्द्विजवरश्च निजश्च बन्धु
स्तस्मिन्गृहानुपगते सदृशं किमेतत् ।
विद्वानपि प्रचलितस्तु यदेष मार्ग्गा
त्क्षात्रं हि तव विजयाय शमं भज त्वं ॥ २२ ॥

वसि° ॥ शापोदकमपहरन् ॥ वत्स शतानन्द यथाह संबन्धी महाराजदशरथः । अन्यच्च ॥

यत्कल्याणं किमपि मनसा तद्वयं वर्त्तयाम
स्त्वं जावालिप्रभृतिसहितः शान्तिमध्यग्नि कुर्य्याः ।
जेतुं जैत्रानथ खलु जपन्सूक्तसामानुवाका
नस्मच्छिष्यैः सह स भगवान्वामदेवो वृणोतु ॥ २३ ॥

॥ परिष्वज्य निष्क्रामयति ॥

जाम° ॥ पश्यत वटोः क्षत्रियावष्टब्धस्य गर्ज्जितानि । तत्किमनेन । भो भोः कोसलेश्वरविदेहप्रसादोपजीविनो ब्राह्मणाः सप्तकुलपर्व्वतद्वीपगोचराश्च सर्व्वक्षत्रियाः वदामः ।

तपो वा शस्त्रं वा व्यपदिशति यः कश्चिदिह वः
स दर्प्पादुद्दामद्विषमसहमानः स्खलयतु ।
अरामां निःसीरध्वजदशरथीकृत्य जगती
मतृप्तस्तत्कुल्यानपि परशुरामः शमयति ॥ २४ ॥

॥ नेपथ्ये ॥

भार्गव भार्गव । अति हि नामावलिप्यसे ।

जाम॰॥ असूयति नामायमस्मदवलेपाय जनकः संरब्धश्च ॥

॥ प्रविश्य जनकः ॥

जन॰॥ शत्रुध्वंसात्परिणतिवशाद्ब्रह्मतन्त्रप्रधाने

नैरन्तर्य्यादथ च परमब्रह्मतत्त्वोपलम्भात् ।

क्षात्रं तेजो विजयि सहजं यद्व्यरंसीदिदं त

त्त्वत्युद्भूय त्वरयति पुनः कर्म्मणे कार्म्मुकं नः ॥ २५ ॥

जाम॰॥ भो जनक ॥

त्वं ब्रह्मण्यः किल परिणतश्चासि धर्म्मेण युक्त

स्त्वां वेदान्तेष्वचरम ऋषिः सूर्य्यशिष्यः शशास ।

इत्याचारादसि यदि मया प्रश्रयेणोपजुष्ट

स्तत्किं रोषादविदितभयः कर्कशानि ब्रवीषि ॥ २६ ॥

जन॰॥ अरण्डभेदनं क्रियते प्रश्रयश्चेति शृणुत भोः सभासदः ॥

भृगोर्वंशे जातस्तपसि च किलायं स्थित इति

द्विषत्यप्यस्माभिश्चिरमिह तितिक्षैव हि कृता ।

यदा भूयो भूयस्तृणवदवधूनोत्यनिभृत

स्तदा विप्रेऽप्यस्मिन्नमतु धनुरन्यास्ति न गतिः ॥ २७ ॥

जाम॰॥ सरोमहासाक्षेपं ॥ किमात्थ भोः किमात्थ धनुरिति ॥

आश्चर्य्यं ॥

क्षत्रालोकक्षुभितहुतभुक्प्रस्फुलिङ्गाट्टहासं

हास्यः पश्यन्नपि रिपुशिरःस्यानशातं कुठारं ।

दत्तोत्सेकः प्रलपति मया याज्ञवल्क्यानुरोधा
न्मिथ्याध्मातः किमपि रजसा जर्ज्जरः क्षत्रबन्धुः ॥ २८ ॥

जन० ॥ सवेगं ॥ किमत्र बहुना ॥

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र
जृम्भाविडम्बि विकटोदरमस्तु चापं ॥ २९ ॥

॥ इति धनुरारोपयति ॥

॥ नेपथ्ये ॥

विरम नरपते कथं द्विजेऽस्मि
न्नविरतयज्ञवितीर्णगोसहस्रः ।
तव पलितनिरन्तरः पृषत्कं
स्पृशति पुराणधनुर्धरस्य पाणिः ॥ ३० ॥

जन० ॥ सखे महाराज दशरथ ।

अस्मानधिक्षिपतु नाम न किंचिदेत
त्कस्य द्विजे परुषवादिनि चित्तभेदः ।
वत्सस्य मङ्गलविरुद्धमयं तु पापः
कर्णे रटन्कटु कथं नु वटुर्विषह्यः ॥ ३१ ॥

जाम० ॥ आः दुरात्मन्क्षत्रियापसद वटुरित्यधिक्षिपसि ॥

उत्तिष्ठोत्तिष्ठ यावद्विशकलितपकृक्क्रोमवक्षोदुकान्त
स्नायुग्रन्थ्यस्थिमुक्तव्यतिकरितजरत्कन्धरादत्तकण्ठः ।

मूर्द्धच्छेदादुदञ्चज्जलधमनिसिरारक्तडिण्डीरपिण्ड
प्रायः प्राग्भारघोरं पशुमिव परशुः पर्व्वशस्त्वां शृणातु ॥ ३२ ॥

॥ प्रविश्यान्तरे दशरथः ॥

दश° ॥ भो भार्ग्गव भो भार्ग्गव ।

एष नो नरपतिर्यथा स्थितः
स्वं शरीरमपि न स्थितं तथा ।
तत्र वाक्परिभवैः कृतैर्वयं
सर्व्वथैव ननु दुःखमास्महे ॥ ३३ ॥

जाम° ॥ ततः किं ॥

दश° ॥ ततश्च न क्षम्यते ॥

जाम° ॥ त्वमप्यपरः प्रभविष्णुरिव मामवस्कन्दयसि । चेतयस्व नित्यनिरवग्रहः प्रकृत्यैव रामोऽस्मि जामदग्न्यः । क्षत्रियश्च भवान् ॥

दश° ॥ अतः खलु नोपेक्ष्यसे ।

दुर्द्दान्तानां दमनविधयः क्षत्रियेष्वायतन्ते
दुर्द्दान्तस्त्वं वयमपि च ते क्षत्रियाः शासितारः ।
सद्यः शान्तो भव किमपरं दम्यसे सोऽधुनैव
क्व ब्रह्माणः प्रशमनपराः क्षत्रधार्य्यं क्व चास्त्रं ॥ ३४ ॥

जाम° ॥ विहस्य ॥ चिरस्य खलु कालस्य जामदग्न्यः सनाथो वर्त्तते । यस्य यूयं क्षत्रिया राजानो विनेतारः ॥

दश° ॥ अरे किमत्र काचिद्भ्रान्तिः ।

अज्ञो वा यदि वा विपर्य्ययगतो ज्ञानेऽथ संदेहभृ
द्दृष्टादृष्टविरोधि कर्म्म कुरुते यस्तस्य गोप्ता गुरुः।
निःसंदेहविपर्य्यये सति पुनर्ज्ञाने विरुद्धक्रियं
राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥ ३५ ॥

विश्वा० ॥ युक्तमाह भो महाराजः।

अनुत्पन्नं ज्ञानं यदि यदि च संदेहविधुरं
विपर्य्यस्तं वा स्यात्परिचर वसिष्ठस्य चरणौ।
ध्रुवं ज्ञाने दोषः कथमपरथा दुर्व्यवहृति
र्विशुद्धौ चेत्पापं चरसि न सहन्ते नृपतयः ॥ ३६ ॥

जाम० ॥

धर्म्मे ब्रह्मणि कार्म्मुके च भगवानीशो हि मे शासिता
सर्व्वक्षत्रनिबर्हणस्य विनयं कुर्य्युः कथं क्षत्रियाः।
संबन्धस्तु वसिष्ठमिश्रविषये मान्यो जरायां न तु
स्पर्द्धायामधिकः समश्च तपसा ज्ञानेन चान्योऽस्ति मे ॥ ३७ ॥

वसि० ॥ भृगुप्रसवात्पराजय इति प्रियं नः। किंनु खलु।

अस्माभिरेव पाल्यस्य प्रशस्तत्वात्प्रियस्य नः।
अस्मद्गृहे पुराणस्य पश्याचारस्य विप्लवं ॥ ३८ ॥

जनकदशरथविश्वामित्राः ॥ अनार्य्य निर्मर्य्याद।

जगत्सनातनगुरौ वसिष्ठेऽपि निरङ्कुशः।
व्यालद्विप इवास्माभिरपक्रम्यैव दम्यसे ॥ ३९ ॥

जाम० ॥ एवमवधूतोऽस्मि।

अन्तर्धैर्य्यभरेण वृद्धवचनात्संपीड्य पिण्डीकृतो
हृन्मर्म्मोच्छ्रितशल्यवत्परिदहन्मन्युश्चिरं यः स्थितः।
स्फूर्ज्जत्येव स एष संप्रति मम न्यक्कारभिन्नस्थितेः
कल्पापायसरत्प्रकीर्णपयसः सिन्धोरिवौर्व्वानलः ॥ ४० ॥

दिष्ट्या।

निकारः प्राप्तोऽयं ज्वलति परशुर्मन्युरिव मे
पृथिव्यां राजानो दशरथवले सन्त्युपहिताः।
पुनर्द्वाविंशोऽपि प्रकुपितकृतान्तोत्सवकर
श्चिरात्क्षत्रस्यास्तु प्रलय इव घोरः परिसरः ॥ ४१ ॥

वसि०॥ कष्टं भोः कष्टं

कामं हि नः स्वजन एष तथापि दर्प्पा
द्धोरं व्यवस्यति कथं नु भवेदवध्यः।
संदूषितेन च मया मुहुरीक्षितश्चे
द्वत्सस्य भार्ग्गवशिशोर्दुरितं हि तत्स्यात् ॥ ४२ ॥

विश्वा०॥ अब्रह्मवर्च्चसमिवाभ्भस्यशस्त्रसामर्थ्यमरे जामदग्न्य मन्यसे।

ब्रह्मक्षत्रसमाजमाक्षिपसि यद्वत्से च घोराशय
स्तेनातिक्रमणेन दुःखयसि नः पाल्योऽसि संवन्धतः।
आत्तस्त्वां प्रति कोपनस्य तरलः शापोदकं दक्षिणः
प्राक्संस्कारवशेन चापमितरः पाणिर्ममान्विष्यते ॥ ४३ ॥

जाम०॥ ननु भोः कौशिक।

त्वं ब्रह्मवर्च्चसधरो यदि वर्त्तमानो
यद्वा स्वजातिसमयेन धनुर्धरः स्याः।
उग्रेण भोस्तव तपस्तपसा दहामि
पक्षान्तरे तु सदृशं परशुः करोतु ॥ ४४ ॥

॥ नेपथ्ये ॥

अयमहं भोः कौशिकान्तेवासी रामः प्रणम्य विज्ञापयामि।
पौलस्त्यविजयोद्दामकार्त्तवीर्य्यार्ज्जुनद्विषं।
जेतारं कार्त्तिकेयस्य विजयेयं नमोऽस्तु वः ॥ ४५ ॥

दश० ॥ प्राप्तो रामभद्रः ॥ कथं हि नामैतत्।

जन० ॥ हन्त भोः प्रशस्तमभ्यनुजानीत ॥ विजयतां रामभद्रः।

अयं विनेता दृप्तानामेष वीरो जगत्पतिः।
वयं वसिष्ठधौरेयाः सर्व्वे प्रतिभुवोऽत्र वः ॥ ४६ ॥

दश० ॥

नन्वद्यैव प्रथितयशसामूढरक्षाव्रतानां
याज्ञानां वो गुणवति गृहे रामभद्रस्तु जातः।
ज्ञानज्योतिःपरिगतभवद्भूतभव्याः प्रभावं
यद्ब्रह्मणः कमपि शिशुकेऽप्यत्र संवेदयन्ते ॥ ४७ ॥

जाम० ॥ एहि मन्ये राजपुत्र जामदग्न्यं विजेष्यसे। सस्मिते। न हि विजेष्यसे। दुर्दमो हि रेणुकापुत्रस्त्वदन्तकः। तथा हि। संप्रति ॥

कृतघ्नियकण्ठकन्दरसरत्कीलालनिर्वापित
प्रत्युद्भूतशिखाकरालहुतभुग्झांकारिभिर्मार्गणैः ।
एतद्भस्मरकालरुद्रकवलव्यापारमभ्यस्यतु
प्रलस्तध्वनिकुञ्जपुञ्जितघनज्याघोषघोरं धनुः ॥ ४८ ॥

॥ इति निष्क्रान्ताः सर्वे ॥

---

॥ संसृष्टो नाम तृतीयोऽङ्कः ॥ ३ ॥

---

॥ नेपथ्ये ॥

भो भो वैमानिकाः प्रवर्त्यन्तां प्रवर्त्यन्तां मङ्गलानि ।
कृशाश्वान्तेवासी जयति भगवान्कौशिकमुनिः
सहस्रांशोर्वंशे जगति जयति क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधरः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥ १ ॥

॥ ततः प्रविशतः संभ्रान्तौ विमानेन शूर्पणखामाल्यवन्तौ ॥

माल्य॰॥ वत्से दृष्टस्त्वया दिवौकसामेकायनीभावः यदि-न्द्रादयः स्वतो वन्दित्वमुपागताः ॥

शूर्प॰॥ ण हि तुम्हेहिं णिव्वदं वि संवदइ । संपदं च उक्कम्पिदम्हि । ता किं एत्थ करणिज्जं ॥

माल्य॰॥ यासौ राज्ञा दशरथेन प्राक्प्रतिश्रुतवरद्वया राज्ञी भरतमाता कैकेयी तस्या मन्थरा नाम परिचारिका

दशरथस्य वार्त्ताहारिणी मिथिलामायोध्यायाः संप्रेषिता मिथिलोपकण्ठे वर्त्तेत इति संप्रत्येव मे निवेदितं चारकैः। तस्यास्त्वया शरीरमाविश्य एवमेवं च कर्त्तव्यं॥ इति कर्णे कथयति॥

शूर्प्प०॥ किमस्सध करिस्सदि एव्वं णामेति॥

माल्य०॥ भिद्येत नो सद्वृत्तमिक्ष्वाकुगृहेषु विशेषतस्तादृशस्य विजिगीषोः॥

शूर्प्प०॥ तदो किं॥

माल्य०॥ ततोऽनेन योगाचारन्यायेन सुदूरमाकृष्य रक्षसामङ्कमुपनीतस्य विन्ध्यकान्तारेष्वदेशज्ञस्य विचरतः सुकराण्यवस्कन्दनानि स्युः॥ विराधदनुकबन्धप्रभृतयो हि दण्डकारण्यसत्त्रेषु तीक्ष्णाश्चरिष्यन्ति। शक्या हि लुप्तप्रभुशक्तेरुत्साहशक्तिश्छद्मनाभिसंधातुं॥ अनिवर्त्तनीयश्च रावणस्य सीतास्वीकारग्रहः। स चैवमीषत्करः सप्रयोजनश्चेति॥

शूर्प्प०॥ अह लक्खणसहाअत्तणे पि किंपि पओअणं॥

माल्य०॥ वीरोऽस्त्रपारगश्चिन्त्यो यथा रामस्तथैव सः।
छद्मदण्डप्रयोगस्तु यथैकस्मिंस्तथा द्वयोः॥ २॥

शूर्प्प०॥ मम दुदिअं एव्व एदं ण जुत्तं पडिभादि। जं च दूरट्ठिदस्स दासरहिणो सण्णिधाणकरणं। जं च अणावद्धवेरस्स अप्पडिसमाधेअं इत्थिआ वेरं ति॥

माल्य०॥ स तावद्भूम्यानन्तर्य्यतः प्रत्यासन्न एव सानुचरसुन्दोपसुन्दपुत्रोपप्लवात्ताटकारिः कथमनाबद्धवैरः। अप्रतिविधेयं च रामरावणयोरितरथापि वैरं। पश्य॥

पाल्यं तस्य जगद्वयं तु जगतो नित्यं हठादेशिनः
सामैवं सति कीदृगप्रियकृता शश्वद्विरुद्धात्मना।
कानर्थान्रघुनन्दनो मृगयते देवैः पतिर्यो वृत
स्तस्माद्दानमपीह नास्ति न भिदा तस्येषवः साधनं॥ ३॥
न दण्डोऽप्यधिके शत्रौ न प्रकाशः प्रकाशते।
तूष्णींदण्डस्तु कर्त्तव्यस्तस्य चायमुपक्रमः ॥ ४॥

तथा सति सीतापहारतः किमपरं कुर्य्यात्। किंच।

हृतजातिररातिभिः सलज्जो
यदि मृत्युः शरणं ततोऽन्यथापि।
मृदितो मृत एव निष्प्रतापः
परितप्याप्यथवा घटेत संधौ ॥ ५॥

उत्तिष्ठेत वधाय नः परिभवप्रौढेन चेन्मन्युना
नेष्टे तत्प्रसरं निरोद्धुमुदधिस्तिग्मांशुवीर्य्यो हि सः।
किंतु प्राक्प्रतिपन्नरावणसुहृद्भावेन भीमौजसा
शत्रुर्वज्रधरात्मजेन हरिणा घोरेण घानिष्यते ॥ ६॥

अनेन च प्रसङ्गेन बह्वनुसंधातव्यं॥

शूर्प्प०॥ किं विअ॥

माल्य०॥ रावणप्रियासि वत्से कार्य्यज्ञा च यतो निःशङ्कमावेद्यते हृदयखेदः।

क्षितेरानन्तर्यादपकृदपकृत्यश्च सततं
द्विधा रामः शत्रुः प्रकृतिनियतः क्षत्रिय इति।

तृतीयो मे नप्ता रजनिचरनाथस्य सहजो
रिपुप्रत्यासत्तेरहिरिव भयं नो जनयति ॥ ७ ॥

कुम्भकर्णस्तु सन्नयसत्तमः स्वापव्यसनादविनयाच्च। विभीषणस्त्वागामिकात्मगुणसंपन्न इति अनुरक्ताः प्रकृतयः। खरदूषणत्रिशिरसस्तु कुलसदृशवृत्तयो राजानमुपतिष्ठन्ते यतस्ते वत्सेनेव धेनुं राजानमर्थान्दुहन्ति। उपजापिताश्च प्रतिजपन्ति प्रकृतयः। तदिदमन्तर्भेदजर्ज्जरं राजकुलमभियुक्तमात्रं रामेण भेद्यते। यथोक्तं लघ्वपि व्यसनपदमभियुक्तस्य न कृच्छ्रसाध्यं भवतीति तत्र च विभीषणावग्रहतः प्रतिविधानं। स तु प्रकाशदण्डस्तूष्णींदण्डः संरोधनमपसारणं वा स्यात्। तत्र प्रकाशदण्डमभिन्नसंबन्धाः कथं राक्षसास्तितिक्षेरन्। तूष्णींदण्डोऽपि प्राज्ञैरनुमीयमानः प्रकृतिकोपके रामेऽभियोक्तरि दुरन्तः स्यात्।

संरोधने त्वभिभवाद्विहिते तदेक
मैत्र्या खरप्रभृतयश्च तदा विकुर्य्युः।
निर्वास्यमानमपि तं परिवारयेयु
स्तस्मात्खरप्रभृतयश्च पुरतो विचिन्त्याः ॥ ८ ॥

तत्र रामस्योपयोग इति ॥

शूर्प्प॰॥ अहो अणुजीवित्तणस्स अगरुअदा। जं रावणस्स खरप्पमुहाणं च तुल्ले वि कुलसंबन्धे एव्वं मादामहो चिन्तेदि ॥

माल्य॰॥ ईदृशः कुलपुत्रकाचारः।

शूर्प्प॰॥ विणा खरप्पमुहेहिं विभीसणस्स का पडिवत्ती॥

माल्य॰॥ प्राज्ञः खल्वसावुत्प्रेक्षितविकारः स्वयमेवापसर्प्पेत। उपेक्षणीयस्त्वस्माभिर्न चैतन्मन्तव्यमौरसं भयमिति। यतः।

वाल्यात्प्रभृत्येव विरूढसख्यः
सुग्रीवमेष ध्रुवमाश्रयेत।
वालिप्रसादीकृतभूमिभागे
कुमारभुक्तौ स्थितमृष्यमूके ॥ ९ ॥

ततश्च वालिना पतिष्यते न रामोपश्रयेण। रामोपश्लेषणेन वा नोपेक्षेत वाली॥

शूर्प्प॰॥ अध रामो परसुरामविजई जणिदविरोधं वालिनं वावादेदि तदो विभीसणरामसंजोओ अणत्थो त्ति संभावेमि॥

माल्य॰॥ ननु वत्से।

यो वालिनं हन्ति हता वयं स्म
स्तेन ध्रुवं तत्र तु सर्व्वनाशे।
एकः स जीव्यात्कुलतन्तुरस्मै
रामः श्रियं धर्म्ममयो ददाति ॥ १० ॥

शूर्प्प॰ ॥ सास्रं ॥ एव्वं वि दाव होदु॥

माल्य॰॥ गम्यतामिदानीं वत्से यत्र प्रेषितासि। सूकरं

चैतत्प्रयोजनं। यदा जनकदशरथान्तिके वसिष्ठविश्वामित्रौ न स्यतां। अहमपि लङ्कामेव गच्छामि॥

शूर्प्प०॥ हा अम्ब तुए वि दुःखं पेखिदव्वं॥

माल्य०॥

हा वत्साः खरदूषणप्रभृतयो वध्या स्थ पापस्य मे
हा हा वत्स विभीषण त्वमपि मे कार्य्येण हेयः स्थितः।
हा मद्वत्सल वत्स रावण महत्पश्यामि ते संकटं
वत्से कैकसि हा हतासि न चिरात्त्रीन्पुत्रकान्द्रक्ष्यसि॥११॥

॥ इति निष्क्रान्तौ॥

॥ विष्कम्भकः॥

॥ ततः प्रविशतो वसिष्ठविश्वामित्राभ्यां सह जनकदशरथौ॥

॥ राजानावन्योन्यं परिष्वज्य॥

जन०॥ राजन्दिष्ट्या वर्द्धसे यदीदृशस्ते वत्सो रामभद्रः।
अप्राकृतानि च गुणैश्च निरन्तराणि
लोकोत्तराणि च फलैश्च महोदयानि।
वीरस्य यस्य महतश्चरिताद्भुतानि
नास्माकमेव जगतामपि मङ्गलानि॥१२॥

वसि०॥ विश्वामित्रं परिष्वज्य॥ सखे कुशिकनन्दन।
अस्माभिरप्यनाशास्यो रामस्य महिमान्वयः।
यत्कृतास्तेन कृतिनो वयं च भुवनानि च॥१३॥

विश्वा० ॥ प्रकृष्टपुण्यपरिपाकोपादान एष महिमा । के वयमेतावतः प्रहर्षस्य ॥

दश० ॥ भगवन्कुशिकनन्दन मा मैवं ॥

आदित्याः कुलदेवतामिव नृपाः पूर्व्वे दिलीपादय
स्तेजोराशिमरुन्धतीपतिमृषिं भक्त्या यदाशिश्रियन् ।
पाकश्लाघ्यतराश्च भूरितपसां सत्याशिषामाशिष
स्तासामप्ययमेव मङ्गलविधिर्यन्नः प्रसन्नो भवान् ॥ १४ ॥

वसि० ॥ सत्यमीदृशो विश्वामित्रः ॥

यद्वाचां विषयमतीत्य चेतसां वा
पर्यायात्परमतिशायनस्य वा यत् ।
ब्रह्मर्षौ तदिह दुरासदे समिद्धं
तेजोभिर्ज्वलति महत्तपोऽप्रमेयं ॥ १५ ॥

विश्वा० ॥ भगवन्मैत्रावरुण ॥

सनत्कुमाराङ्गिरसौ गुरू विद्यातपोमयौ ।
स्तौषि चेत्सत्य एवास्मि सत्यसंधा हि ते गिरः ॥ १६ ॥

रामभद्रे तु नाश्चर्य्यमेतत महाराजदशरथो हि तस्य प्रसविता ॥

साक्षात्पुण्यसमुच्छ्रया इव मनोर्वैवस्वतस्यान्वये
राजानस्त्वदपेक्षितेन विधिना गोपायितारः प्रजाः ।
ये भूताः प्रथमे पवित्रचरितास्तेषामयं धूर्द्धरो
वीरः क्षत्रियपुङ्गवो गुणनिधिः श्लाघ्यो धरित्र्याः पतिः ॥ १७ ॥

अपिच ।

अरिष्टस्त्वाष्ट्रस्य प्रशमनविधौ जम्भदमनः
स विश्वेषामीशः पतिरपि निकायस्य मरुतां ।
विजेतारं सेनाः सततमपहन्तारमसुरा
नमुं वीरं वव्रे बहुषु समनीकेषु मघवा ॥ १८ ॥

सोऽयमीदृशः कथमनीदृशं प्रसूते । कथमचाश्चर्य्यं नाम ।

मरुत्वन्तं देवं य इह भगवन्तं विजयते
विजिग्ये तं राजा युधि दशमुखं हैहयपतिः ।
निहन्तारं तस्य प्रथितमहिमानं त्रिभुवने
महावीरं जित्वा किमिव हि न वत्सेन विजितं ॥ १९ ॥

दश० ॥ तत्किमित्ययं द्विधा भिद्यते लोकः ॥

विश्वा० ॥ एष वत्सो रामभद्रः स जामदग्न्य इत एवाभिवर्त्तते । य एषः ।

वीरश्रियाच विजयेनच रोचमानो
मान्ये मुनाववनतश्च गुणोन्नतश्च ।
लज्जां वहन्भृगुपतौ हृतवीर्य्यदर्प्पे
शिष्यो गुराविव कृतप्रथमापचारः ॥ २० ॥

॥ ततः प्रविशतो रामजामदग्न्यौ ॥

रामः ॥ यद्ब्रह्मवादिभिरुपासितवन्द्यपादे
विद्यातपोव्रतनिधौ तपतां वरिष्ठे ।
दैवात्कृतस्त्वयि मया विनयापराध
स्तत्त्वं प्रसीद भगवन्नयमञ्जलिस्ते ॥ २१ ॥

जाम० ॥ अपराद्धं वत्स त्वया जामदग्न्यस्य नोपकृतं ॥

पुण्या ब्राह्मणजातिरन्वयगुणः शास्त्रं चरित्रं च मे
येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि ।
एकः सन्नपि भूरिदोषगहनः सो ऽयं त्वया प्रेयसा
वत्स ब्राह्मणवत्सलेन शमितः क्षेमाय दर्प्पामयः ॥ २२ ॥

रामः ॥ कथं नापराद्धं मया । यदायुधपरिग्रहं यावदारूढो दुर्योगः ॥

जाम० ॥ एष वो न्यायः ।

असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणां ।
यथा वैद्यस्तथा राजा शस्त्रपाणिर्विषह्यति ॥ २३ ॥

रामः ॥ को ऽहमुक्तिप्रत्युक्तिकायां भगवतः । तस्मादित इतो भगवन् ॥

जाम० ॥ क्व पुनर्मया वत्स गन्तव्यं ॥

रामः ॥ यत्र तातश्च तातजनकश्च । अथवा । शान्तं ॥ उत यत्र भगवन्तौ मैत्रावरुणकौशिकौ ॥

जाम० ॥ इदमिदानीमशक्यं । अनतिक्रमणीयश्च राजनिर्देशः ॥ परिक्रम्य ॥ हे भगवन्तौ ॥

स एष रामः सौम्यत्वादचण्डश्चण्डविक्रमः ।
यस्य प्रतिष्ठितं जैत्रं जामदग्न्यो ऽपि शासनं ॥ २४ ॥

राजानौ ॥ अतिगम्भीरः सौजन्योद्गारः ॥

रामः ॥ एष वो रामशिरसा प्रणामपर्यायः ॥

सर्व्वे ॥ एह्येहि वत्स । इति परिष्वजन्ते ॥

जाम० ॥ भगवन्मैत्रावरुण एष जमदग्निपुत्रः प्रणम्य कौशिकेन सार्द्धमत्रभगवतो विज्ञापयामि ।

वृद्धातिक्रमसंभृतस्य महतो निर्णिक्तये पाप्मनः
प्रायश्चेतनमादिशन्तु गुरवो रामेण दान्तस्य मे ।
प्राग्धर्म्मस्य भवन्त एव परमद्रष्टार आसन्गुरो
र्लब्धा ज्ञानमनेकधा प्रवचनैर्मन्वादयः प्राणयन् ॥ २५ ॥

वसि० ॥ अद्य नः श्रोत्रियाणां गृहे जातोऽसि ।

दुर्विनीते त्वयि वयं दुःखिताः सुखिनोऽन्यथा ।
निसर्गो ह्येष वृद्धानां यत्तु श्रेयस्तथैव तत् ॥ २६ ॥

तत्परिपूत एवासि ॥

विश्वा० ॥ अपहतं ते विद्मः पाप्मानं रामभद्रेण । यतः प्रायश्चित्तं इव राजदण्डोऽप्येनसो निष्क्रयमामनन्ति धर्म्माचार्य्याः किं पुनरत्रभगवान्वसिष्ठः प्रजापालनसंनिधौ प्रशास्ति ॥

रामः ॥ एतानि तानि साक्षात्कृतधर्म्माणामृषीणां प्रसन्नगम्भीरपावनानि वचनानि ॥

दश० ॥ भगवञ्जामदग्न्य ॥

निसर्गतः पवित्रस्य किमन्यत्पावनं तव ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ २७ ॥

जाम० ॥ भगवति वसुन्धरे प्रसीद रन्ध्रदानेन ॥

जन० ॥ भगवन् यदि प्रसन्नोऽसि तद्विस्रब्धोपवेशनात्परिपुनीहि गृहान् एतत्पूतमासनं भगवतः ॥

जाम० ॥ यदभिरुचितं सूर्य्यशिष्यान्तेवासिने राजन्यश्रोत्रियाय ॥

॥ सर्वे उपविशन्ति ॥

दश० ॥ जनपदवहिर्निष्ठा यूयं गृहस्य परिग्रहा
द्वयमपि निजैर्व्यग्राः कार्य्यैस्ततो न बभूव यः ।
स इह भवतामद्यास्माभिर्मनोरथवाञ्छितः
सुचरितपरीपाकात्प्राप्तश्चिरस्य समागमः ॥ २८ ॥

अत्रच ।

का ते स्तुतिः स्तुतिपथादतिवृत्तधाम्नः
किं दीयतामविकलक्षितिदायिने च ।
शान्तस्य किं परिजनेन मुने तथापि
पुत्रैः समं दशरथोऽद्य वशंवदस्ते ॥ २९ ॥

जाम० ॥ यूयमीदृशा इति किमत्राश्चर्य्यं ।

प्रेद्धं धाम यदामनन्ति सुधियः सोऽयं निधिर्ज्योतिषां
देवो वः सविता कुलस्य किमतो भूत्यै प्रशंसापदं ।
यज्वानः परमार्थराजऋषयस्ते यूयमिक्ष्वाकवो
येषां वेद इवाप्रमेयमहिमा धर्म्मे वसिष्ठो गुरुः ॥ ३० ॥

अपिच ।

संग्रामेष्टसमाप्तिदं दिविषदां भर्त्तुर्धनुः साधनं
सप्तद्वीपनिविष्टयूपनिलयश्रेण्यङ्किता भूर्गृहाः ।
शश्वत्कीर्त्तिनिवन्धनं भगवती भागीरथी सागरः
प्रख्यातानि च तानि तानि भवतां भूमानमाचक्षते ॥ ३१ ॥

॥ वसिष्ठविश्वामित्रौ ॥ अपवार्य ॥ एतदपि शिक्षितं वत्सेन ॥

जाम० ॥ रामभद्र मामनुमोदस्वारण्यगमनाय ॥

विश्वा० ॥ मामप्यथ भवन्तोऽनुजानन्तु ।

रघुजनकगृहेषु गर्भरूपव्यतिकरमङ्गलवृद्धयोऽनुभूताः ।
भृगुपतिदमन

॥ इत्यर्धोक्ते विरम्य ॥

भृगुपतिविदितोन्नतिं च वत्सं प्रियमभिनन्द्य सुखी गृ
हानुपेयी ॥ ३२ ॥

दश० ॥ वत्स रामभद्र प्रस्थितस्ते भगवान्कौशिकः ॥

विश्वा० ॥ सास्रं । राममालिङ्ग्य ॥ अहमेव सौम्य न त्वां मोक्तुमुत्सहे ।

किंत्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ३३ ॥

वसि० ॥ गृहात्स्वगृहं गन्तुमागन्तुं च कामचारः ॥

विश्वा० ॥ भगवन्यद्यनुरुध्यते तदेहि सिद्धाश्रमपदं । उभौ गच्छावः । त्वां पुरस्कृत्य गच्छन्मधुच्छन्दसो मातुः सत्कार्यो भविष्यामि ॥

वसि० ॥ किमेतावत्यपि भवानस्मासु न प्रभवति ॥

राजानौ ॥ रमणीयः पावनो ब्रह्मर्षिसंगमः ।

अन्योन्यमहात्म्यविदोरन्यैरविदितात्मनोः ।
विराजते विरोधोऽपि नाम स्नेहे तु का कथा ॥ ३४ ॥

॥ नेपथ्ये ॥

एषा रामवधूर्गुरून्वन्दते ॥

ऋषयः ॥ वत्से जानकि ।

वीरेण ते विनयमाङ्गलिकेन पत्या
वृत्रद्रुहः प्रशमितेषु महाभयेषु ।
क्षत्रप्रकाण्डगृहिणीबहुमानपूजा
मूर्जस्वलामपि शची मनसा करोतु ॥ ३५ ॥

रामः ॥ स्वगतं ॥ अचिरात्समूलकाषंकषितेषु राक्षसेष्वेवं स्यात् ॥

ऋषयः ॥ स्वस्त्येवमेवासतां भवन्तः । उत्तिष्ठन्ति ॥

इतरे ॥ उत्थाय ॥ नमो नमो वः ॥

जाम० ॥ भगवन्तौ जामदग्न्योऽभिवादयते ।

॥ वसिष्ठविश्वामित्रौ ॥

स्थिरस्ते प्रशमो भूयात्प्रत्यग्ज्योतिः प्रकाशतां ।
अच्छिन्नशिवसंकल्पमन्तःकरणमस्तु ते ॥ ३६ ॥

॥ इति निष्क्रान्तौ ॥

जाम० ॥ किंचित्परिक्रम्य स्थित्वाच ॥ वत्स रामभद्र इतस्तावत् ॥

रामः ॥ उपश्रित्य ॥ आज्ञापय ॥

जाम० ॥ यन्मया क्षत्रियोच्छेदविश्रान्तेनावधारितं ।
तदेतदधुना धत्ते धनुः कारणशून्यतां ॥ ३७ ॥

इध्मादिप्रयोजनमस्तु परशुः ।

पुण्यानामृषयस्तटेषु सरितां ये दण्डकायां वने
भूयांसो निवसन्ति तेषु सततं लङ्कासदो राक्षसाः।
विध्वंसाय चरन्ति तत्प्रमथने स्वस्योपयोगो भवे
त्संप्रत्येव सतामुनैव धनुषा वत्सेऽधिकारे स्थितः ॥ ३८ ॥

॥ अर्प्पयति ॥

रामः ॥ प्रणम्य ॥ प्रतिगृहीतेयमाज्ञा ॥

जाम ॥ सास्रं परिक्राम्य ॥ आयुष्मन्प्रतिनिवर्त्तस्व ॥ इति निष्क्रान्तः ॥

रामः ॥ सबाष्पं ॥ गतो भगवान्भार्ग्गवः ॥ विचिन्त्य ॥ तदपि नामान्येन केनचिदुपायेन दण्डकारण्यानां प्रतिष्ठेयं। कथंच रामप्रियाङ्गुरुजनादेवं स्यात् ॥

न्यस्तशस्त्रे भृगुपतौ परतन्त्रे तथा मयि।
कष्टमुत्सारिताः क्रूरैर्यातुधानैस्तपोधनाः ॥ ३९ ॥

॥ नेपथ्ये ॥

आर्य्य। आर्य्य। माध्यमायाः प्रियसखी मातुर्वो मन्थरेति या।
सा प्राप्तेयमयोध्यायास्तव राम दिदृक्षया ॥ ४० ॥

रामः ॥ साधु यदिदमस्यां शिशुजनप्रवासवैमनस्यं विच्छिद्येत। तद्वत्स लक्ष्मण उपसर्प्पय ॥

॥ ततः प्रविशति लक्ष्मणः मन्थरावेषा शूर्प्पणखाच ॥

शूर्प्प ॥ आवेसिअमन्थरासरीरा सुप्पणहा अहं वसिट्ठविस्सामित्तगमणेण सुसमाहितं। अम्हो एसो परसुरामविजई खत्तिअकुमारओ रामो। निर्वर्ण्य। अहो समग्गसोहग्गलच्छीपरिग्गहेण लोअणरसाअणसोम्मं से सरीरणिम्माणं।

भो दाणिं चिरआलवेहव्वदुक्खपम्हसिदसंसारसोक्खस्स वि जणस्स चारित्तधीरसुपूरिदं पुणो वि हिअअं परिप्फुरावेदि॥

रामः ॥ प्रणिपत्य ॥ अपि मन्थरे कुशलमम्बायाः ॥

शूर्प्प॰ ॥ सुहं कुसलं च । वच्छ सदा एसा पाहुदत्थणी मज्झमा दे मादा परिस्सजिअ आणवेदि । पुत्तअ पुरा पडिस्सादे दुवे वरे महाराअं जाणावेमि । एत्थ मे विस्सत्तिहारओ होहि । एस तादस्स कज्जलेहो ॥

लक्ष्म॰ ॥ गृहीत्वा वाचयति ॥ अस्त्वेकेन वरेण वत्सभरतो भोक्ताधिराज्यश्रियः ॥ स्वगतं ॥ कथमेतदार्य्ये तिष्ठति कनिष्ठस्यार्य्यभरतस्य राज्यप्रार्थनं ॥ प्रकाशं ॥ यात्वन्येन विहाय कालहरणं रामो वनं दण्डकां ॥ स्वगतं ॥ हा अम्ब किं कृतं त्वया आर्य्यगमनवरणेन ॥ प्रकाशं ॥

तस्यां चीरधरश्चतुर्दश समास्तिष्ठत्वसौ तं पुनः ।
सीतालक्ष्मणमात्रकात्परिजनादन्यो न चानुव्रजेत् ॥ ४१ ॥

स्वगतं ॥ हा पापरण्डे मातृबन्धु॥

सदा भरतशत्रुघ्नलक्ष्मणार्य्यमुखैः कृतां ।
अम्बेति व्याहृतिं हित्वा किं कृतं पापया त्वया ॥ ४२ ॥

रामः ॥ अहो प्रसादप्रकर्षः ।

तत्रैव गमनादेशो यत्र पर्युत्सुकं मनः ।
न चैष विरहो जातः स च वत्सो नृपोऽनुजः ॥ ४३ ॥

लक्ष्म॰ ॥ दिष्ट्यानुमोदितोऽहमार्य्येण ॥

रामः ॥ आर्य्ये मन्थरे एष प्रस्थितोऽस्मि ॥

शूर्प्प॰॥ णमो दाणिं भअवदो संसारस्स। जत्थ ईरिसा वि कप्पदुमा परोहन्ति॥

॥ इति निष्क्रान्ता ॥

लक्ष्म॰॥ अये मातुलो युधाजिदार्य्यभरतसहचरस्तातमुपसर्प्पति॥

रामः॥ दिष्ट्या। कष्टंच॥

अपरिष्वज्य भरतं नास्ति मे गच्छतो धृतिः।
अस्मत्प्रवासदुःखार्त्तं न त्वेनं द्रष्टुमुत्सहे॥४४॥

॥ प्रविश्य युधाजिद्भरतौ। दशरथमुपश्रित्य ॥

देव श्रूयतां। यदेकायनीभूय प्रकृतयस्त्वां विज्ञापयन्ति।

त्रय्यास्त्राता यस्तवायं तनूज
स्तेनाद्यैव स्वामिनस्ते प्रसादात्।
राजन्वत्यो रामभद्रेण राज्ञा —
लब्धक्षेमाः पूर्णकामाश्चरामः॥४५॥

दश॰॥ सखे जनक।

प्रिये कल्याणकामाभिः प्रजाभिश्चोदिता वयं।
किंतु रामप्रियौ नेह मैत्रावरुणकौशिकौ॥४६॥

जन॰॥ परोक्षे सुकृतं कर्म्म तयोः प्रीतिं करिष्यति।
मन्त्रज्ञो वामदेवस्तु भगवानास्त एव हि॥४७॥

दश॰॥ यद्येवं। तदयमेव जामदग्न्यविजयमहोत्सवः प्रसज्यतामभिषेकमहोत्सवेन॥

रामः॥ इदमिदानीं कथं।

दश० ॥ सुमन्त्र संनिधाप्यन्तामाभिषेचनिकाः संभाराः ।
यश्च येनार्थी स तेन पर्याप्तकामः कर्त्तव्यः ॥

रामः ॥ उपसृत्य प्रणम्य च ॥ अहं तावदर्थी ॥

दश० ॥ वत्स केन ॥

रामः ॥ योऽसौ वरद्वयन्यासस्त्वं त्वां माताद्य मध्यमा ।
यथेष्टं नाथते तात तत्प्रसादार्थिनो वयं ॥ ४८ ॥

दश० ॥ सत्यसंधा हि रघवः किं वत्स विचिकित्ससे ।
त्वयि दूतेऽपि कस्तस्याः प्राणानपि धनायते ॥ ४९ ॥

रामः ॥ वत्स वाच्यतां ॥

लक्ष्म० ॥ अस्त्वेकेन वरेण० ॥ इत्यादिकं वाचयति ॥

इतरे ॥ कथमन्यदेव किमपि ॥ हा हताः स्मः ॥

॥ राजा मूर्च्छति ॥

रामलक्ष्मणौ ॥ तात समाश्वसिहि । समाश्वसिहि ॥

जन० ॥ इक्ष्वाकुवंशतिलकस्य नृपस्य तस्मि
न्पत्नी विशुद्धिमति राजकुले प्रसूता ।
अत्याहितं किमपि राक्षसकर्म्म कुर्य्या
दार्य्या सती कथमहो महदद्भुतं नः ॥ ५० ॥

रामः ॥ तात तात ॥
सत्यसंधा स्थ यदि वा रामो यदि च वः प्रियः ।
तत्प्रसीदतु तातो नः पूर्णकामास्तु मध्यमा ॥ ५१ ॥

दश० ॥ एवमस्तु । का गतिः ॥

जन०॥ हा वत्स रामभद्र हा वत्स लक्ष्मण।

पुनःसंक्रान्तलक्ष्मीकैर्यद्वृद्धैरिक्ष्वाकुभिर्धृतं।
त्वया तत्क्षीरकण्ठेन प्राप्तमारण्यकं व्रतं ॥ ५२ ॥

वत्से जानकि धन्यासि यस्यास्ते गुरुनियोगादेव भर्त्तुरनुगमनं॥

दश०॥ हा वत्से जानकि कङ्कणधरैव रक्षसामुपनीतास्युपहारतां॥

॥ इत्युभौ मूर्च्छितः ॥

रामः॥ अत्यापन्नो गुरुजनः कथं नामैतत्॥

लक्ष्म०॥ आर्य्य। ईदृशोऽयमायातकरुणस्नेहसंवेगः। किमत्र क्रियते। प्रतिषिद्धं च नः कालहरणं भरतजनन्या। तदलमतिस्नेहकातर्य्येण॥

रामः॥ साध्वाचारनिष्ठुर साधु। अमनुष्यसदृशस्ते चित्तसारः। तद्वत्स वैदेहीमानय॥

॥ लक्ष्मणः निष्क्रान्तः ॥

भरतः॥ मातुल मातुल युक्तमेतद्वो गृहस्य॥

युधाजित्॥ वत्स उद्भ्रान्तः संवृत्तोऽस्मि॥

पतिर्मृत्योर्वक्त्रे व्रजति वनमेतत्सुतयुगं
वधूटी रक्षोभ्यो बलिरिव वराकी प्रणिहिता।
निरालम्बो लोकः कुलमयशसा तच्च निहतं
स्वसुर्मे दौरात्म्यं जगदविकलं विक्लवयति ॥ ५३ ॥

॥ ततः प्रविशति लक्ष्मणः सीता च ॥

लक्ष्म०॥ आर्य्य इयमार्य्या॥

रामः ॥ इत इतः ॥ सीतालक्ष्मणाभ्यां सह गुरुजनं प्रदक्षिणीकृत्य ॥ मातुल ॥

एष तातश्च तातश्च प्रियापत्याश्च मातरः ।
आश्वासनीयाः शोकेऽस्मिन्भवतैव गता वयं ॥ ५४ ॥

॥ इति परिक्रामन्ति ॥

युधा० ॥ सावेगं ॥ कथं वारण्ये त्यजामि । उत्थायानुधावति ॥

भर० ॥ अनुगच्छन् ॥ मातुल ब्रूहि किमिदानीं करोमि ॥

युधा० ॥ रामभद्र रामभद्र अपेक्षस्व पादपरिचारकमरण्यानुचरं भरतं ॥

रामः ॥ नन्वस्यापि वर्णाश्रमरक्षणे गुरुनियोगः ॥

भर० ॥ लक्ष्मणस्य शत्रुघ्नस्य वा तदस्तु ॥

रामः ॥ किमत्र कस्यचित्स्वरुचिः ॥

भर० ॥ एतावती मम स्वरुचिः ॥

रामः ॥ आः शक्यं नाम मयि तिष्ठति त्वयान्येन वा गुरुनियुक्तमुल्लङ्घयितुं ॥

भर० ॥ हा हा कथं परित्यक्तोऽस्मि मन्दभाग्यः ॥ इति मूर्च्छति ॥

युधा० ॥ वत्स समाश्वसिहि समाश्वसिहि ॥

भर० ॥ आश्वस्य ॥ मातुल मातुल धारयस्व मां ॥

युधा० ॥ वत्स एवं तावत् । भरतस्य कर्णे कथयित्वा । रामभद्र एवमयं विज्ञापयति । यदेतद्भगवता शरभङ्गेन प्रेषितं तपनीयोपानद्युगलं तदार्य्यः प्रसादीकरोत्विति ॥

रामः ॥ तदुन्मुच्य गृहाणेदं वत्स ॥

भर० ॥ शिरस्यारोप्य २ ॥ आर्य्य ॥

रामः ॥ परिष्वज्य ॥ मत्पादस्पृष्टिकया प्रतिनिर्वर्त्तस्व । संप्रति संभावय चिरप्रमूढौ तातौ ॥

भर० ॥ अयमिदानीमहं ।

नन्दिग्रामे जटां बिभ्रदभिषिच्यार्य्यपादुके ।
पालयिष्यामि पृथिवीं यावदार्य्यो निवर्त्तते ॥ ५५ ॥

॥ सीतारामौ प्रदक्षिणीकरोति ॥

लक्ष्म० ॥ आर्य्यभरत लक्ष्मणः प्रणमति ॥

॥ भरतः परिष्वज्य वाष्पस्तम्भं नाटयति ॥

रामः ॥ वत्स तातौ संभावय ॥

भर० ॥ कष्टमद्यापि नोच्छ्वसितः । इति वीजयति ॥

जन० । समुच्छ्वस्य । सर्व्वतो विलोक्य ॥ हा हा मुषितोऽस्मि ॥

दश० । उच्छ्वस्य ॥ वत्सरामभद्र न गन्तव्यं २ ॥

प्राणाः पतन्ति परितस्तमसा वृतोऽस्मि
मर्म्मच्छिदो मम रुजः प्रसरन्त्यपूर्व्वाः ।
अक्ष्णोर्मुखेन्दुमुपधेहि गिरं च देहि
हा पुत्र मय्यकरुणः सहसैव मा भूः ॥ ५६ ॥

॥ सोन्मादमिव ॥

निर्भरं भोः क्व प्रविशामीदानीं मन्दभाग्यः ॥

॥ इति विक्लवो भरतजनकाभ्यां नीयमानो निष्क्रान्तः ॥

युधा० ॥ वत्स रामभद्र २ ॥

एकीभूय शनैरनेकसमयव्युत्पन्नमेकक्रियं
मुक्ताक्रन्दमितस्ततः किमिदमित्युद्भ्रान्तनारीनरं।
एतत्तत्पुरमन्यथैव सहसा संजातमावेद्यते
यस्मिन्कर्द्दमितेषु वर्त्मसु घनैर्बाष्पाम्बुभिर्दुर्द्दिनं ॥ ५७॥

रामः॥ मातुल मातुल। प्रतिनिवर्त्तस्व। अयं च वो हस्ते भरतः॥

युधा०॥ अनुरुध्यस्व मामनुगच्छन्तं॥

रामः॥ शान्तं॥ गुरवो यूयं नानुगन्तारः॥ आत्मना तृतीयेन गन्तव्यमित्यम्बाया आदेशः॥

युधा०॥ किमहमेकोऽनुगच्छामि अपितु सबालवृद्धाः प्रकृतयः किं न पश्यसि॥

स्कन्धारोपितयज्ञपात्रनिचयाः स्वैर्वाजपेयार्ज्जितै
श्छत्त्रैर्वारयितुं तवार्ककिरणानेते महाब्राह्मणाः।
साकेताः सह सैनिकैरनुपतत्पत्नीगृहीताग्नयः
प्राक्प्रस्थापितहोमधेनव इमे धावन्ति वृद्धा अपि॥ ५८॥

रामः॥ मातुल मातुल। गुरुभिरेव शिशवो धर्म्मलोपात्पालयितव्याः तत्प्रसीदत नः प्रतिनिवृत्य निवर्त्त्यतामयं महाजनः॥ इति प्रणमति॥

युधा०॥ वत्सोत्तिष्ठोत्तिष्ठ। एव वो वञ्चयित्वा प्रजाः क्वापि मन्दभाग्यो गच्छामि॥

त्वां लक्ष्मण महाबाहो त्वां च वैदेहनन्दिनि।
आमन्त्रये निवृत्तोऽस्मि पापः कल्याणमस्तु वां॥ ५९॥

॥ रुदन्प्रतिनिवृत्य ॥

अहो नु खलु भोः ।

प्रतिमन्वन्तरं भूतैर्गीयमाना चरिष्यति ।
प्रातःपवित्रं लोकानामियं चारित्रपञ्चिका ॥ ६० ॥

॥ इति निष्क्रान्तः ॥

लक्ष्म० ॥ कथितमार्य्यस्य शृङ्गवेरपुरवास्तव्येन निषादपतिना गुहेन तत्प्रदेशपर्यन्तावस्कन्दिनो विराधराक्षसस्य दुर्विलसितं ॥

रामः ॥ तेन हि विराधहतकोन्मथनाय संनिकृष्टप्रयागमनुषक्तमन्दाकिनीपवित्रमेखलं चित्रकूटं नामाचलमुपेत्य मुनिभिरुपजुष्टतीर्थे रक्षांसि निहत्य दण्डकां प्राप्य । संनिहितगृध्रराजं क्रमेण यामो जनस्थानं ॥

॥ इति निष्क्रान्ताः सर्व्वे ॥

---

॥ चारित्रं नाम चतुर्थोऽङ्कः ॥ ४ ॥

---

॥ ततः प्रविशति संपातिः ॥

संपा॰ ॥ नूनमद्य वत्सजटायुरभिवादनाय मलयकन्दरकुलायमुपसीदति ॥ तथा हि।

पर्य्यायक्षणदृष्टनष्टककुभः संवर्त्तविस्तारयो
नीहारीकृतमेघमोचितधुतव्यक्तस्फुरद्विद्युतः।
आरात्कीर्णखखण्खणीकृतगुरुग्रावोच्चयश्रेणयः
श्यैनेयस्य वृहत्पतत्रधुतयः प्रख्यापयन्त्यागमं ॥ १ ॥

दूरोद्वेल्लितवाडवस्य जलधेरुल्लोलभिन्नाम्भसो
रन्ध्रैरापतितेन वेगमरुता पातालमाध्मायते।
यद्वैकुण्ठवराहकण्ठकुहरस्फारोच्चरद्भैरव
ध्वानोच्चण्डमकाण्डकालरजनीपर्ज्जन्यवज्जर्ज्जति ॥ २ ॥

॥ प्रविश्य जटायुः ॥

जटा॰ ॥ कावेरीवलयितमेखलस्य सानावेकस्मिन्मलयगिरेर्दिवः पतामि।
यत्रार्य्यो निवसति काश्यपः शकुन्तः
शैलेन्द्रो पर इव विप्रयुक्तपक्षः ॥ ३ ॥

विस्रंसयन्ती परिगृह्य पक्षौ
जाता ममाप्युत्पतनश्रमार्त्तिः।
शक्तिर्हि कालस्य विभोर्जराख्या
शक्त्यन्तराणां प्रतिबन्धहेतुः ॥ ४ ॥

तदयमार्य्यो मन्वन्तरपुराणगृध्रराजः संपातिः । अहो भ्रातृस्नेहः ।

पुराकल्पे दूरोत्पतनखुरलीकेलिजनिता
दतिप्रत्यासङ्गात्परितपति गात्राणि तपने ।
अवष्टभ्यासौ मामुपरि ततपक्षः शिशुरिति
स्वपक्षाभ्यां प्लोषादविकलमरक्षत्करुणया ॥ ५ ॥

॥ उपश्रित्य ॥

आर्य्य काश्यप त्वां जटायुरभिवादये ॥

संपा० ॥ एह्येहि वत्स ।

त्वया पुत्रवती श्येनी गृध्राणां चक्रवर्त्तिना ।
गरुत्मतेव वीरेण विनता नः पितामही ॥ ६ ॥

॥ परिष्वज्य ॥

वत्स जटायो । अपि कालविप्रकर्षान्मन्दीभूतः पितृमरणशोको रामभद्रस्य ॥

जटा० ॥ तस्य विद्या तपो वृद्धसंयोगः स्वा च धीरता ।
न्याय्यो रक्षाधिकारश्च दौर्मनस्यं व्यपोहति ॥ ७ ॥

संपा० ॥ तृप्तैर्विराधमांसानां गृध्रैरावेदितं हि मे ।
चित्रकूटाद्यथा रामः शरभङ्गाश्रमं गतः ॥ ८ ॥
तदा च शरभङ्गेन हव्यवाहे हुता तनुः ।
अथोपसेदिवान्नाम सुतीक्ष्णादीन्मुनीनपि ॥ ९ ॥

जटा० ॥ बाढमधुनागस्त्यवचनाद्रामः पञ्चवट्यां प्रतिवसति ॥

संपा० ॥ चिरात्स्मृत्वा ॥ आः । अस्ति जनस्थाने पञ्चवटी नाम गोदावरीतटोद्देशः । वत्स जटायो विषयबाहुल्यं कालविप्रकर्षश्च नः स्मृतिं मुष्णाति ।

कल्पस्यादौ मम परिचयस्तावदासीदुदस्था
द्यावद्विष्णोरुपरिचरणश्चारुगङ्गापताकः ।
पर्य्यन्तेष्वप्यवधिवलयस्तेजसां यावदद्रि
र्लोकालोकः परिकलयितः सप्तमस्याम्बुराशेः ॥ १० ॥

जटा० ॥ तत्रैकदा रघुनन्दनं वृषस्यन्ती शूर्पणखा प्राप्ता ॥

संपा० ॥ अहो निर्मर्य्यादता ।

अनेकयुगजीविन्यास्त्रेता यस्यास्तयोदशी ।
सा क्षीरकण्ठं तं वत्सं लज्जयन्ती न लज्जिता ॥ ११ ॥

जटा० ॥ तस्याश्च कर्णनासोष्ठकर्त्तनेन न्यवीविश
द्दशाननतिरस्कारप्रशस्तिमिव लक्ष्मणः ॥ १२ ॥

संपा० ॥ तन्निमित्तकस्तर्हि कश्चिदनुबन्धः परैरभियोगः ॥

जटा० ॥ बाढं । एकेनैव च रामभद्रेण ।

चतुर्दशसहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्द्धानो मृधे हताः ॥ १३ ॥

संपा० ॥ आश्चर्य्यमथवा नाश्चर्य्यमेतद्दाशरथौ । महत्पुनरपावृतं वैरद्वारमिति मन्यमानः संप्रमुग्धोऽस्मि । तद्वत्स जटायो नास्मिन्नवसरे सीतारामलक्ष्मणास्त्वया क्षणमपि मोक्तव्याः ।

स्वसुः सोदर्य्यायाः कथमिव निकारं दशमुख
स्तथा भूयोभूयः स्वजनविनिपातं च सहते ।

मदान्धो मायावी प्रभुरमितवीर्य्योऽन्तिकचरः
सपत्नः कष्टं नो निपुणमनुपाल्या हि शिशवः ॥ १४ ॥

अहमपि समुद्रे कृताह्निकः शिवतातिपरिणतिमनुध्यास्यामि।

॥ इति निष्क्रान्तः ॥

जटा॰ ॥ उत्पत्य गगनगमनमभिनीय ॥

एषोऽहं प्रलयमरुत्प्रचण्डरंहः
संक्षिप्तप्रथिम पिबन्निवान्तरिक्षं।
क्षेपीयो मलयगिरेर्निवासभूमि
त्संसक्तक्षितिरुहजालमभ्युपेतः ॥ १५ ॥

अयमविरलानोकहनिवहनिरन्तरस्निग्धनिर्मलपरिसरारण्यपरिणद्धगोदावरीमुखकन्दरः सततमभिनिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यदेशगो गिरिः प्रस्रवणो नाम । इयं च पञ्चवटी । विभाव्य ॥ अये ॥

दूरं हृतश्चित्रमृगेण रामः
तया दिशा गच्छति लक्ष्मणोऽपि।
ततः परिव्राडुटजं प्रविष्टो
धिग्व्यक्तरूपो दशकन्धरोऽयं ॥ १६ ॥

प्रमादः ॥

परःसहस्रैरायुक्तं पिशाचवदनैः खरैः।
रथं वधूटीमारोप्य पापः क्वाप्येष गच्छति ॥ १७ ॥

पौलस्त्य पौलस्त्य।

धर्त्तारः प्रलयेषु ये भगवतो वेदस्य विद्येश्वरा
स्तेषामन्वयसंभवस्य भवतः स्नातस्य वेदव्रतैः ।
जेतुर्नैतलसद्मनोऽपि तपसा हन्नस्य राज्ञः सतो
निन्द्या दुश्चरिता च नाभिजननी जाता कथं दुर्मतिः ॥ १८ ॥

कथमवज्ञया न शृणोतीव । आः दुरात्मन्नैर्ऋतापसद तिष्ठ तिष्ठ ।

तुण्डप्रोतशिरःकरोटिशिखराकृष्टिस्फुरत्प्रस्फुट
क्लोमप्लीहयकृद्धृतोष्णरुधिरस्राव्यन्त्रजालस्य ते ।
अत्युग्रक्रकचप्रचण्डनखरोत्कृत्तक्वणत्कीकसै
रङ्गैः खण्डितकन्धराधमनिभिः श्येनीसुतस्तृप्यतु ॥ १९ ॥

॥ निष्क्रान्तः ॥

॥ विष्कम्भकः ॥

॥ प्रविश्य लक्ष्मणः ॥

हा आर्य्ये क्वासि कष्टं दशाविपाकमनुभवत्यार्य्यो मारीचात् ।

एष मूर्त्त इव क्रोधः शोकाग्निरिव जङ्गमः ।
कृच्छ्राद्बिभर्त्ति हृल्लेखलज्जासंवेगिनीं तनुं ॥ २० ॥

तथा हि ।

आभुग्नभ्रुकुटीविटङ्कघटनासंसूचितान्तःस्फुर
द्धैर्यस्तम्भितदुर्व्यवस्थविततप्रोच्चण्डकोपानलः ।
उद्धूमावलिरम्भसामिव निधिर्मध्यज्वलद्वाडवो
विद्युद्व्यञ्जितवज्रगर्भजलदच्छायां समालम्बते ॥ २१ ॥

॥ ततः प्रविशति रामः ॥

रामः ॥

न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरे ऽन्धे तमसीव मज्जति मनः संमीलितं लज्जया।
शोकस्तातविपत्तिजो दहति मां नास्त्येव यस्मिन्क्रिया
मर्म्माणीव पुनर्भिनत्ति करुणा सीतां वराकीं प्रति ॥ २२॥

लक्ष्म० ॥ आर्य्य आर्य्य न खलु लोकोत्तरकर्म्माणस्त्वादृशाः प्रमुह्यन्ति कृच्छ्रेषु॥

रामः॥ वत्स लोकोत्तराण्येव कर्म्माणि रामस्य।

यैर्गुप्तान्यकुतोभयानि भुवनान्यासन्महाभीशव
स्ते सूर्य्यान्वयकेतवो नृपतयः पूर्वे तिरस्कारिताः।
कल्पान्तेष्वपि यः स्थितः स गमितः साधुर्जटायुर्दिवं
पत्नीं हारयता वने यदकृतं लोकैः कृतं तन्मया ॥ २३ ॥

हा तात काश्यप शकुन्तराज क्व पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः संभवः॥

लक्ष्म०॥ पश्यामीव तां पश्चिमामवस्थां तातस्य।

यामोषधिमिवायुष्मन्विचिनोषि वनेवने।
सा सीता मम च प्राणा रावणेनोभयं हृतं ॥ २४॥

इत्येतदेवाभिधाय वीरलोकमधिष्ठितस्तातः॥

रामः॥ वत्स वत्स हृदयमर्म्मविधः खल्वमी कथोद्घाताः॥

लक्ष्म०॥ अतश्च तस्मिन्दुरात्मनि सर्वप्रकारेण वैरानृण्यमुपगच्छावः॥

रामः॥ अथ किं। किं हि नामैतत्करिष्यते। यदेतावतः पश्चिमातिप्रसङ्गस्य तुल्यं स्यात्।

प्रागेव राक्षसवधाय मतिः स्थिता मे
वध्या हि ते वहुभिरेव यतो निमित्तैः।
तस्माचके त्विह कृते ऽपि कुतः शमो मे
कृत्यं कुलस्य कदनात्परतश्च नान्यत्॥ २५॥

तथापि वत्स।

प्रचण्डपरिपिण्डितः स्तिमितवृत्तिरन्तर्मुखः
पिवन्निव मुहुर्मुहुर्झटिति मन्युरुच्चैर्ज्वलन्।
शिखाभिरिव निश्वरन्ननुपलब्धदाह्यान्तरः
पयोधिमिव वाडवो दहति मामतस्त्वायतां॥ २६॥

लक्ष्म॰॥ एतान्यतिसंभ्रान्तविविधमृगयूथान्युन्मत्तचण्डश्वापदकुलाक्रान्तविकटगिरिगह्वरारण्यरण्यानि दक्षिणां दिशमभिवर्त्तन्ते। तदेभिरेव पथिभिर्भवावः॥

रामः॥ अदृष्टपूर्वाः खल्वमी जनस्थानविभागाः॥

लक्ष्म॰॥ ननु तदैव तातमारुणिं गृध्रराजमग्निसात्कृत्य निर्गतयोः पञ्चवट्याश्रमादावयोः को ऽपि कालो वर्त्तते। यदा दूरविच्छिन्नाः संप्रति जनस्थानसीमानः। यथा चैतान्यग्रतः प्रतिभयजननान्यरण्यानि तथा नूनमसौ जनस्थानपश्चिमः कुञ्जवान्नाम दनुकवन्धाधिष्ठितो दण्डकारण्यविभागः॥

रामः॥ द्रष्टव्य एव स दुरात्मा कान्तारमण्डूकः॥

॥ नेपथ्ये ॥

कः को ऽत्र भोः परित्रायतां परित्रायतामनेन दुरात्मना राक्षसकबन्धेनाकृष्यमाणामरण्ये स्त्रियं।

अहं हि श्रमणा नाम सिद्धा शबरतापसी।
मतङ्गाश्रमवास्तव्या रामान्वेषिण्युपागता ॥ २७॥

रामः॥ वत्स लक्ष्मण गच्छ गच्छ॥

लक्ष्म०॥ एष गतो ऽस्मि ॥ इति निष्क्रान्तः॥

रामः॥ प्रिये हा हा क्वासि प्रकिर मधुरां वाचमथवा
पराभूतैरित्थं विलपनविनोदो ऽप्यसुलभः।
अनिन्द्यः पौलस्त्यो व्रजतु परिवादो मयि पुन
र्गतो रूढे वैरे वहुगुणमनेन प्रविकृतं ॥ २८॥

॥ ततः प्रविशति लक्ष्मणः श्रमणा च॥

लक्ष्म०॥ तत्क्रूरदन्तकरपत्रनिकृत्तसत्त्व
संघातनिःसरदसृक्स्नुतकूर्चगुच्छं।
वक्त्रं वपुश्च विकृताकृति दीर्घवाहो
रार्य्येण राक्षसकुतूहलिना न दृष्टं ॥ २९॥

आर्य्ये श्रमणे अयमार्य्यः॥

श्रम०॥ जयति जयति देवः॥

रामः॥ अथास्मत्पर्यन्वेषणे किं प्रयोजनं॥

श्रम०॥ शृणोषि रावणानुजं विभीषणं॥

रामः॥ कस्तं न शृणोति॥

श्रम०॥ स च दैवाद्यदेव खरदुषणप्रभृतयो निहतास्तदेव-

बन्धुभ्यः कस्यापि हेतोः परिक्रम्य सुग्रीवसख्यादृष्यमूके वर्त्तते तस्यायमात्मसमर्प्पितो लेखः ॥ इति लेखमर्प्पयति ॥

लक्ष्म० ॥ गृहीत्वा वाचयति ॥ स्वस्ति रामदेवं प्रणम्य विभीषणो विज्ञापयति ।

विश्लिष्टभागधेयानां द्वयी नः परमा गतिः ।
धर्म्मः प्रकृष्यमाणो वा गोप्ता धर्म्मस्य वा भवान् ॥ ३० ॥

रामः ॥ वत्स ब्रूहि किं प्रतिसंदिश्यतामेवंवादिनः प्रियसुहृदो लङ्केश्वरस्य तत्रभवतो महाराजविभीषणस्य ॥

लक्ष्म० ॥ यदा लङ्केश्वरः प्रियसुहृदित्युक्तमार्य्येण तत्किमवशिष्यते संदेशस्य ॥

रामः ॥ यथाह सौमित्रिः ॥

श्रम० ॥ अनुगृहीता स्मः ॥

लक्ष्म० ॥ आर्य्ये श्रमणे कथय विभीषणसंपर्क्कादस्ति काचिदार्य्यायाः प्रवृत्तिः ॥

श्रम० ॥ वर्त्तमाने नास्ति । यदा पुनर्दुरात्मना रावणापसदेनापह्रियमाणायाः स्रस्तमनसूयानामाङ्कमुत्तरीयं तच्च तैर्गृहीतं ॥

रामः ॥ हा प्रिये महारण्यवासप्रियसखि विदेहराजनन्दिनि ॥ इति संवरणं नाटयति ॥

लक्ष्म० ॥ आर्य्ये केन कस्य वा हेतोस्तद्गृहीतं ॥

श्रम० ॥ ऋष्यमूके रामगुणपक्षपातात्सुग्रीवविभीषणहनूमत्प्रभृतिभिः ॥

रामः ॥ द्रष्टव्या हि निष्कारणप्रियकारिणो भुवनमहनीयमहिमानस्ते महात्मानः तच्च सीतावासश्च्युतमभिज्ञानं । तदृष्यमूकमभिसंधाय तावद्गच्छावः ॥

श्रम० ॥ इत इतस्तर्हि देवः ॥ परिक्रामति ॥

लक्ष्म० ॥ हनूमान्हनूमानिति महानेष वीरवादस्तत्रभवतो जातमात्रस्य तस्य समुद्भ्रान्तदेवासुराण्यद्भुतोदाहरणान्यनुश्रूयन्ते । अपिच । किल ।

यद्वज्रकर्षणे वीर्य्यं यद्वायौ वा समुन्नतिः ।
यद्वालिनि महाबाहौ तच्च वीरे हनूमति ॥ ३१ ॥

श्रम० ॥ एवमीदृशो हेमगिरिवास्तव्यस्य तत्रभवतः प्लवङ्गपुङ्गवानीकवृद्धयूथपतेः केसरिणः क्षेत्रसंभवः सूनुराञ्जनेयो हनूमान्नाम । यस्य रेतोधाः पिता भगवान्मातरिश्वा । तत्किं हनूमतैकेन ।

अम्भोधेर्नालिकेलीरसमिव चुलुकैरुच्चुलुम्पन्त्यपो ये
येषामुत्क्षेपहेतुः शिखरिषु लिकुचोदुम्बरप्राय एषः ।
ब्रह्मस्तम्बं निवासद्रुममिव रभसाद्विप्रकर्तुं क्षमा ये
तेषां कोट्योऽप्यसंख्याः सुतममरपतेर्वानराणां नमन्ति ॥ ३२ ॥

रामः ॥ आर्य्ये हस्तदक्षिणेन सुमहानग्निसंचयः । तत्किमेतत् ॥

श्रम० ॥ लक्ष्मणकुमारेण तस्य योजनबाहोश्चितेयमभिसृष्टा ॥

रामः ॥ साधु साधु कृतं ॥

लक्ष्म० ॥ आर्य्य पश्य पश्य ।

सौहित्यात्पृथवः क्वथन्ति रुधिरोत्सेकाश्चमत्कारिण

श्छांकारोत्कटमुत्कटन्ति नलकास्त्वङ्मांसविस्रंसनात् ।

उत्सर्पन्त्यथ मेदसां विकलनादुद्बुद्बुदा वीचय

श्चित्रं चित्रमुदेति कोऽप्ययमितो दिव्यः श्मशानालयात् ॥ ३३ ॥

॥ प्रविश्य दिव्यपुरुषः ॥

दिव्य० ॥ जयति जयति रामदेवः ।

दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः ।

इन्द्रास्त्रकृतकावन्ध्यः पूतोऽस्मि भवतां श्रयात् ॥ ३४ ॥

रामः ॥ प्रियं प्रियं नः ॥

दनुः ॥ माल्यवत्प्रयुक्तेन च मया युष्मदासादनाय दूषितमरण्यमासीत् ॥ अलं वा तत्कालकाश्मल्यस्मरणेन ॥ संप्रति तु युष्मत्प्रभावात्प्रबुद्धसहजज्योतिषः परोक्षमेव वस्तु किंचिन्न प्रतिभाति ॥ तच्च वः प्रतिबोधनाय कृतमहोपकारेभ्यः कथ्यते ॥

प्रार्थ्य माल्यवता वाली युष्मद्घाते नियुज्यते ।

तेनापि रावणे मैत्रीमनुरुध्य व्यपेक्ष्यते ॥ ३५ ॥

रामः ॥ एष एव पन्थाश्चारित्रस्थानं ।

न तादृशः सुहृत्कार्य्ये माध्यस्थ्यमवलम्बते ।

ममाप्यस्मिन्महावीरे सोत्कण्ठमिव मानसं ॥ ३६ ॥

इतरे ॥ क्वान्यत्र रामदेवादमून्यक्षराणि नाम ॥

रामः ॥ भद्रं कृतं सौजन्यं । अधुना नन्द महाभाग स्वेषु लोकेषु ॥

॥ इति दनुर्निष्क्रान्तः ॥

लक्ष्म॰ ॥ आर्य्ये वालिरावणयोः किंनिवन्धना मैत्री ॥

श्रम॰ ॥

कैलासे तुलिते जिते त्रिभुवने हप्यन्तमभ्युद्यतं
दोर्युद्धाय दशास्यमिन्द्रतनयः प्रक्षिप्य कक्षालये।
सांध्यं कर्म्म समाप्य सप्तसु नदीनाथेष्वथो मुक्तवा
नुन्मुक्ताय नताय याचितवते सख्यं च तस्मै ददौ ॥ ३७ ॥

लक्ष्म॰ ॥ दुरात्मन्पौलस्त्यकुलपांसन एष ते क्षत्रियपरितापिनो वीर्य्यस्योत्कर्षः ॥

रामः ॥ एवमुत्तरोत्तरभावश्चिचीयते जीवलोकः ॥

लक्ष्म॰ ॥ आर्य्ये पुरत एष ते शुभ्रंगिरिः किं नामधेयः ॥

श्रम॰ ॥ नायं गिरिर्यशोराशिरिव वीरस्य वालिनः।
एष दुन्दुभिदैत्येन्द्रमाहिषस्यास्थिसंचयः ॥ ३८ ॥

लक्ष्म॰ ॥ उपरुद्धान्यनेन वर्त्मानि तत्परिहृत्य गच्छामः ॥

रामः ॥ नन्वेहि ॥ पदेन क्षिपति ॥

श्रम॰ ॥ आश्चर्य्यं ॥

यत्संक्रन्दननन्दनः कपिवृषा निर्मथ्य दोस्तम्भयो
र्व्यापारेण निरास्थदास्थितगिरेर्देवद्विषो दुन्दुभेः।
तत्कङ्कालमकाण्डपाण्डुरघनप्रस्पर्द्धि रुन्धत्पुनः
पादाङ्गुष्ठविवर्त्तनादयमितो निर्विध्यमाविध्यति ॥ ३९ ॥

लक्ष्म॰ ॥ प्रशान्तगम्भीरनीलविपुलश्रीरण्यगिरिभूमिः प्रसज्यते ॥

श्रम० ॥ ऋष्यमूकपम्पापर्यन्तभूमयः खल्वेताः ॥ तथा चाग्रतो मतङ्गाश्रमपदं । यत्र शून्येऽपि संनिहितसोमचषकविशेषपात्रपरिकरास्तीर्णबर्हिरिध्मवानाज्यगन्धिरद्यापि भगवान्वैश्वानरः समिध्यते ॥

रामः ॥ अचिन्त्यसमृद्धयस्तपसां विशेषाः ॥

श्रम० ॥ देव पश्य पश्य ।

इह समदशकुन्ताक्रान्तवानीरमुक्त
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ ४० ॥

अपिच ॥ दधति कुहरभाजामत्र भल्लूकयूना
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते सल्लकीना
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ ४१ ॥

लक्ष्म० ॥ तत्किमभित एव प्रवृद्धपौरस्त्यमारुतविहन्यमानकदम्बानि काननानि संगलितवाष्पपटलया दृशा परिक्षिप्य धनुरवष्टभ्य धीरधारितशरीरेणार्य्येण सपदि स्थीयते ॥

श्रम० ॥ वत्स किं न पश्यसि ।

स्थितमुपनतजृम्भागर्भबिम्बैः कदम्बैः
कृतमतिकलकण्ठैस्ताण्डवं नीलकण्ठैः ।
उपरिविघटमानप्रौढतापिच्छनीलः
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ ४२ ॥

लक्ष्म० ॥ स्वगतं ॥ अपि नामायमार्य्यः केनचिद्रसान्तरेण विक्षिप्यते ॥

॥ नेपथ्ये ॥

मातामह निवर्त्तस्व निवर्त्तस्व।

त्वन्नियोगादयुक्तोऽपि वधः साधोः करिष्यते।
पूज्योऽपि ननु मित्रस्य यो गुरुर्गुरुरेव सः ॥ ४३ ॥

लक्ष्म० ॥ आर्य्ये कोऽयं ॥

राम० ॥ देव पश्य पश्य।

बिभ्राणश्चारु चामीकरकमलमयं दाम दत्तं मघोना
पिङ्गेनाङ्गेन संध्याच्छुरित इव महानम्बुवाहस्तडित्वान्।
उत्पाताविद्धमूर्त्तेर्दधदुपरि गिरेर्गैरिकाङ्कस्य लक्ष्मी
मन्तःसीमन्तरेखामिव वियति जवादिन्द्रसूनुस्तनोति ॥ ४४ ॥

लक्ष्म० ॥ आर्य्यार्य दिष्ट्या प्राप्तः स वीरगोष्ठीदानप्रियसुहृन्माधवतः ॥

रामः ॥ स्वगतं ॥ महावीरः सः ॥

॥ ततः प्रविशति वाली ॥

वाली ॥

लोकालोकालवालस्खलनपरिलसत्सप्तमाम्भोधिपूरं
विश्लिष्यत्पर्व्वकल्पत्रिभुवनमखिलोत्खातपातालमूलं।
पर्यस्तादित्यचन्द्रस्तवकमवपतद्भूरिताराप्रसूनं
ब्रह्मस्तम्बं लुनीयामिह हि मम विधावस्ति तीव्रो विषादः ॥ ४५ ॥

एवं नामायुक्तमनुरुध्यमानाः पुमांसो महत्ययुक्तगह्वरे पा-

त्यन्ते ॥ यदनेन माल्यवता पौलस्त्यमैत्रीदिवसमनुस्मार्य्य तत्रभवतो रघुध्वजस्य निधने नियुक्तोऽस्मि ॥ अहो ग्रहः ॥ प्रातरारभ्य मामनुबध्नन् किष्किन्धायाः प्रस्थाप्य संप्रति निवृत्तः ॥ कष्टं भोः कष्टं ।

दौरात्म्यादरिभिर्निजार्ज्जवभुचौ मायाविभिर्वञ्चिते
धर्म्मात्मन्यतिथौ निजानपि जगत्पूज्ये गृहानागते ।
एतस्मिन्ननुचितं न नाम विहितं वाचापि नोक्तं प्रियं
धिक्पापेन मया रिपाविव कथं बद्धो वधायोद्यमः ॥ ४६ ॥

कथितं च संप्रत्येवमेव चारकैः ॥ विभीषणेन सुग्रीवस्याप्यनाख्याय रामान्तिकं श्रमणा प्रेषिता । प्रतिपन्नलङ्काधिपत्यश्च तस्य दाशरथिरस्मिन्मतङ्गाश्रमोपकण्ठे वर्त्तत इति ॥ भवत्ववतरामि ॥ तथा नाटयति ॥ कः कोऽत्र भोः ।

विजितपरशुरामं सत्यधर्म्माभिरामं
गुणनिधिमभिरामं द्रष्टुमभ्यागतोऽस्मि ।
भवति च फलवत्ता चक्षुषस्तत्र दृष्टे
भवति च रमणीयो दर्प्पकण्डूनिकाषः ॥ ४७ ॥

रामः ॥ वत्स सौमित्रे मामिहस्थमावेदय महाभागाय ॥

लक्ष्म० ॥ उपश्रित्य ॥ अयमार्य्यस्तिष्ठति ॥ तदुपसर्प्पतु महाभागः ॥

वाली ॥ अपि त्वं पुनरसौ लक्ष्मणः ॥

लक्ष्म० ॥ अथकिं ॥

॥ उपसर्प्पतः ॥

वाली ॥ स्वगतं ॥ स एष रामश्चरिताभिरामो
धर्म्मैकवीरः पुरुषप्रकाण्डः ।
स्वान्येव पूर्वाणि परैश्चरित्रै
र्यो ऽत्यद्भुतैरप्रतिमो ऽतिशेते ॥ ४८ ॥

॥ प्रकाशं ॥ राम ॥

आनन्दाय च विस्मयाय च मया दृष्टो ऽसि दुःखाय वा
वैतृष्ण्यं तु ममापि संप्रति कुतस्त्वद्दर्शने चक्षुषः ।
त्वत्सांगत्यसुखस्य नास्मि विषयस्तत्किं वृथा व्याहृते
रस्मिन्विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भतां ॥ ४९ ॥

रामः ॥ दिष्ट्या यदद्य दृष्टस्त्वं सत्यमेतच्च युज्यते
किंत्वशस्त्रेषु युष्मासु कथं रामो ऽस्तु सायुधः ॥ ५० ॥

वाली ॥ विहस्य ॥ भो महाक्षत्रिय किमित्यननुकम्पनीया-
नप्येवमस्माननुकम्पसे ।
ज्ञाता एव वयं जगत्सु चरितैर्वाग्भिः किमाख्यायते
संयत्तो भव सत्यमस्ति भवतः सत्यं मनुष्यो भवान् ।
शस्त्रैरव्यवधीयमानविजयाः प्रायो वयं तेषु चे
न्नाहस्ते सुखमाश्वसन्ति गिरयो यैर्वानराः शस्त्रिणः ॥ ५१ ॥
तदितः स्थलीमधितिष्ठावः ॥

लक्ष्म० ॥ आर्य्य यथाह महाभागः स्वजातिसमयव्यव-
स्थिता युद्धधर्म्मा इति ॥

वालीरामौ ॥ अन्योन्यमुद्दिश्य ॥

कामं त्वया सह श्लाघ्यो वीरगोष्ठीमहोत्सवः।
किंत्विदानीमतिक्रान्ते त्वय्यवीरा वसुंधरा ॥ ५२ ॥

॥ परिक्रम्य निष्क्रान्तौ ॥

लक्ष्म॰ ॥ कथमास्फालिते धनुषि कुपितः सांक्रन्दनिः। तथाहि।

गर्ज्जत्पर्ज्जन्यघोरस्तनितमविरतरिम्भगम्भीरमन्त
गुञ्जन्गुञ्जाभजृम्भाविवृतमुखविशङ्किश्वदिक्चक्रवालः।
संरम्भोत्तम्भतुङ्गस्थितविततडित्पिङ्गलाङ्गूलकेतु
र्व्यस्तं विस्तार्य्य दर्प्पादपिहितगगनोत्सङ्गमङ्गं धुनोति ॥ ५३ ॥

॥ नेपथ्ये ॥

विभीषण विभीषण।

आर्य्यस्य वालिन इव ध्वनिरेष नूनं
तस्यैव नूतनघनस्तनितप्रचण्डः।
मौर्वीरवश्च कुत एष भयानकः स्या
द्व्यापारितं किमु हरेण धनुः पिनाकं ॥ ५४ ॥

लक्ष्म॰ ॥ आर्य्य अयं नु कः ॥

राम॰ ॥ स एष खलु विभीषणसखः सुग्रीवः सविमर्षसंरम्भं संप्रहारमनुसरति। सर्व्वे च यूथपतयो गिरिगह्वरेभ्यः संपतन्ति ॥

लक्ष्म॰ ॥ तेन हि संप्रति मयाप्यारोपितव्यं धनुः ॥

श्रम॰॥ एष वालिकायदुन्दुभिकरङ्कसप्ततालगिरिमही-तलान्यवदार्य्य रामतूणीरमधिशयितः शरः॥

॥ नेपथ्ये ॥

मद्द्रोहाच्छपथात्प्रसीदतु मतिः पौलस्त्यसुग्रीवयो
र्हे वीराः कपयः शमोऽस्तु भवतामीशः स एवास्मि चेत्।
रामात्प्राप्तमहार्घवीरमरणस्याशास्तिरेषाद्य मे
योऽहं सूर्य्यसुतः स एष भवतां योऽयं स वत्सोऽङ्गदः॥५५॥

लक्ष्म॰॥ तदयमनुचराज्ञानियन्त्रणोन्मुक्तवीरसमयसंग-लदसह्यदुःखनिभृतैर्यूथपतिभिरार्य्येण च सपक्षपातवाष्पैस्स वीक्ष्यमाणः स्वद्रोहशपथयन्त्रितसशोकविभीषणेन याच्य-मानशरीरसौष्ठवः प्रयत्ननिरुद्धनिष्ठुरप्रहारमर्म्मच्छेदवेदना-वेगः परिष्वङ्गव्याजविधृतसुग्रीवकण्ठपरिधीकृतस्वकण्ठकान-ककमलमालागुणः शक्रसूनुरस्यामपि दशायां वीरश्रिया प्रदीप्यते॥

॥ ततः प्रविशतः सुग्रीवविभीषणौ वाली रामश्च ॥

रामः॥ अप्राकृताभिजनवीर्य्ययशश्चरित्रा
न्पुण्यश्रियः कुलमहीधरभूरिसारान्।
एवंविधानपि निपात्य कटुर्विपाकः
सर्व्वंकषः कषति हा विषमः कृतान्तः॥५६॥

वाली॥ वत्स विभीषण पश्य पश्य सुष्ठु शोभते वत्ससु-ग्रीवस्य वक्षसि सहस्रपुष्करमालागुणः।

सुग्रीवविभीषणौ ॥ अपवार्य्य ॥

अकाण्डशुष्काशनिपातरौद्रः
क एष धातुर्विषमो विवर्त्तः ॥
अस्माभिरार्य्यः शपथैर्निरुद्धैः
कथं विलङ्घ्यः कथमासितव्यं ॥ ५७ ॥

वाली ॥ रामभद्र रामभद्र ॥

रामः ॥ आर्य्य अयमस्मि ॥

वाली ॥

यदासक्तं दैवादनभिमतसख्येऽपि हि जने
मया सख्यं प्राणैरनृण इव तस्याहमधुना ।
यदन्यत्साधूनां तव च गुणराशेः समुचितं
प्रहाणे प्राणानां तदपि हि यथाशक्ति विदधे ॥ ५८ ॥

॥ रामः सविनयलज्जाशोकस्तिष्ठति ॥

सुग्रीवविभीषणौ ॥ जनान्तिकं ॥ आर्य्ये श्रमणे कथममृतह्रदादिवास्माकं रामदेवादेष विपाकः ॥

श्रम० ॥ माल्यवता किलैवमिति ॥ उभयोः कर्णे कथयति. ॥

वाली ॥ वत्स सुग्रीव ॥

॥ सुग्रीवो वाष्पस्तम्भं नाटयति ॥

वाली ॥ ननु सुग्रीव ॥ आः प्रतिकूलिकः संवृत्तः ॥

सुग्री० ॥ सकरुणं ॥ आर्य्यार्य प्रसीदाज्ञापय ॥

वाली ॥ वत्स कथय कस्तवास्मि ॥

सुग्री॰ ॥ गुरुः स्वामी च ॥

वाली ॥ त्वं तु मम कः ॥

सुग्री॰ ॥ शिशुः प्रेष्यश्च ॥

वाली ॥ वत्स कथय क आवयोरन्योन्यधर्म्मः ॥

सुग्री॰ ॥ वशित्वं वो वश्यता च मम ॥

वाली ॥ तं हस्ते गृहीत्वा ॥ तर्हि दत्तो ऽसि रामाय । रामभद्र नन्वेष गृह्यतां ॥

रामसुग्रीवौ ॥ को हि पूज्यस्य गुरोर्वचनं न वहुमन्यते ॥

विभी॰ ॥ अहो विस्तरस्थाने ऽपि धर्म्मोपपत्तिपरिशुद्धः संक्षेपः ॥

वाली ॥ वत्स सुग्रीव अथ ब्रह्मपुत्रादाचार्य्याज्जाम्बवतः अधीतधर्म्मपारायणवचनेन कीदृशस्त्वया मैत्रीधर्म्म आगमितः ॥

सुग्री॰ ॥ प्राणैरपि हिते वृत्तिरद्रोहो व्याजवर्ज्जनं ।
आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतं ॥ ५९ ॥

वाली ॥ रामभद्र तवापि भगवतः सहस्रकिरणान्वयपुरोहिताद्वसिष्ठादेष एव हि संप्रदायः ॥

रामः ॥ आर्य्य अथकिं ॥

वाली ॥ तदनेन मैत्रीधर्म्मेण भवद्भ्यामन्योन्यस्य वर्त्तितव्यं । मदनुरोधात्क्रियतामुपनिबन्धः अग्निसाक्षिकाश्च समयो नातिवर्त्तते ॥ संनिहित एवायं मतङ्गयज्ञाग्निः ॥

रामसुग्रीवौ ॥ अन्योन्यहस्तग्रहं ॥

पुण्ये मतङ्गयज्ञाग्नौ सख्यं निर्वृत्तमावयोः।
ममेव हृदयं तेऽस्तु तवेव हृदयं च मे ॥ ६० ॥

वाली॥ रामभद्र अयं तु वत्सो विभीषणस्त्वया प्रतिश्रुत-लङ्काधिराज्य एव पुरतः श्रमणायाः॥

विभी० ॥ सलज्जाशङ्कं॥ कथं ज्ञातोऽस्मि॥

श्रमणालक्ष्मणौ॥ अहो चारचक्षुष्मत्ता॥

रामः॥ अथकिं॥

विभी०॥ तर्हि प्रसन्नं देवेन ॥ इति प्रणमति॥

सुग्री०॥ मयाप्यविदितः श्रमणावृत्तान्तः। फलतस्त्विति तर्क्कितार्थोऽस्मि॥

रामः॥ हे प्रियसुहृदौ महाराजसुग्रीवविभीषणौ। एष वामिदानीं सौमित्रिः॥

लक्ष्म०॥ आर्य्यौ लक्ष्मणोऽभिवादयते॥

उभौ॥ एह्येहि वत्स ॥ इत्यालिङ्गतः॥

श्रम०॥ अतिगम्भीरः स्वरसः स्वीकारः॥

वाली॥ वत्स विभीषण तवाप्यलमिदानीं स्वार्थशालीनतया। एवंपरिणाममेवैतद्वस्तु। रावणो हि नास्त्येवेति मद्वृत्तान्तेनैव व्याख्यातं। अपत्यस्नेहसाम्येऽपि पिण्डोपजीविनो विशेषतो रावणहितोपस्थानं धर्म्मः। स्वयं कथयितुं सम्यग्विभीषणस्य प्रेयसा योग इति मातामहस्य युक्तं। महान्त एव हि तादृशामगाधसत्त्वानामविनयपरिस्पन्दितं

जानन्ति । प्रचलन्ति हि मे प्राणाः ॥ तदवसानप्रपातस्थल-मुपनयन्तु मां भवन्तः ॥

नीलप्रभृतयः ॥ हा वीर हा मघवनन्दन मन्दराद्रि
निःकम्पसार जगदप्रतिमल्लवीर ।
उद्दर्प्पदुन्दुभिनिशुम्भपटुप्रचण्ड
दोर्दण्डमण्डल गतोऽसि हहा हताः स्म ॥ ६१ ॥

॥ इति रुदद्भिस्तैर्धार्यमाणः परिक्रम्य ॥

वाली ॥ भो महात्मानः प्लवंगमपुंगवाः ॥
सुग्रीवाङ्गदयोः प्रभुत्वमिह यत्सौजन्यमेतद्धि वो
मत्प्रीत्यैव तु नावधीर्य्यमनयोर्यद्वो महिम्नः क्षमं ।
प्राप्तः संप्रति रामरावणरणः स्नेहस्य निर्व्यञ्जक
स्तस्मिन्नञ्जलिरेष शान्तमथवा वीर्य्येषु वः के वयं ॥ ६२ ॥

किंच ॥

कक्षावर्ज्जितदिग्गतङ्गजयुगद्वन्द्वोपमर्द्दाश्च ते
पुच्छास्फोटदलत्समुद्रविवरैः पातालभम्पाश्च ताः ।
कापेयस्य च पौरुषस्य च तथा प्रेम्णो गरिम्णश्च य
द्दोष्णामुन्मथितद्विषां सुसदृशं तन्मा स्म वो विस्मरत् ॥ ६३ ॥

॥ इति निष्क्रान्ताः सर्व्वे ॥

---

॥ महावीरचरित आरण्यकं नाम पञ्चमोऽङ्कः ॥ ५ ॥

---

॥ ततः प्रविशति विषण्णो माल्यवान् ॥

माल्य० ॥ सचिन्तं ॥ अहह । रक्षःपते दुर्विनयविटपिकोरकाः परितः प्रकीर्णा इव ।

वीजं यस्य विदेहराजतनयायाञ्चाङ्कुरोऽपि स्वसु
र्याञ्चा तौ परिवञ्चितुं किसलयं मारीचमायाविधिः ।
शाखाजालमयोनिजापहरणं तस्य स्फुटं कोरकाः
कोशाधीशवधोऽनुजस्य गमनं सख्यं तयोस्तेन च ॥ १ ॥

अयमचिरादेव फलोन्मुखोऽपि भवितेति मन्ये । यतो वृद्धबुद्धिरनागतं पश्यति ॥ निःश्वस्य ॥ अहो वामता भागधेयानां ॥

व्यसनेऽस्मिन्मन्त्रशक्त्या यद्यत्प्रतिकृतं मया ।
अलसस्य यथा कार्य्यं तत्तत्प्रच्युतमात्मना ॥ २ ॥

सानुतापं ॥ साचिव्यं नाम महते संतापाय ।

यत्किंचिद्दुर्मदाः स्वैरमाद्रियन्ते निरर्ग्गलं ।
तत्र तत्र प्रतीकारश्चिन्त्यो वक्रे विधावपि ॥ ३ ॥

अहो दुरात्मनः क्षत्रियवटोः सर्व्वातिशायि चरितं । यत्तथाविधशौर्य्योष्माणं कपिचक्रवर्त्तिनं शरैः संयमयता किं नाम न विहितं ॥ स्मरणं नाटयित्वा ॥ उक्तं च किष्किन्धातः प्रतिनिवृत्तेन चारकेण यत्सीतामन्वेष्टुमनुदिशमभिदुद्रुवुः कपिपुङ्गवा इति ॥

॥ नेपथ्ये ॥

भ्रान्तीः सप्ताधिकानां प्रविदधदरुणैरर्च्चिषां चक्रवालैः
प्राचीराणामलक्ष्यप्रसृतिरतिसमुत्तप्तरौक्मालयेषु।
अर्द्धप्लुष्टापसर्प्पद्रजनिचरभटोद्गाढकल्पान्तशङ्क
लङ्कां प्रौढो हुताशः सहपरिदलितोऽब्धेस्त्रिकूटेन लीढे ॥ ४ ॥

॥ प्रविश्य पटाक्षेपेण संभ्रान्ता त्रिजटा ॥

त्रिज० ॥ परित्ताअदु परित्ताअदु कणिट्ठमादामहो ॥ इति सोरस्ताडनं पतति ॥

माल्य० ॥ वत्से अलं कातरया किमिदमुच्चैरत्याहितं ॥

त्रिज० ॥ उत्थाय ॥ कणिट्ठमादामह किं कहेमि मन्दभाइणी एसो खु को वि दुट्ठवाणरो सअलं विढज्झिअ णअरं खणमेत्तएण तीरकक्खणाहरिणीखेवविक्खित्तविविहरक्खसलोओ अक्खेण खु कुमालएण अणुवन्धिज्जमाणो तस्सिं कदन्तलीलं कदुअ झत्ति णिक्कन्तो ॥

माल्य० ॥ सखेदं ॥ किं नाम दग्धं नगरं। हतोऽक्षः कुमारः। अपि को नामायं कपिः स्यात् ॥ सस्मरणं ॥ उक्तं च चारकेण हनूमानवाचीं दिशमिति । अहह ।

तूलदाहं पुरं लङ्कां दहतैव हनूमता।
अपि लङ्कापतेस्तीव्रः प्रतापो निरवाप्यत ॥ ५ ॥

वत्से अपि तेन सीताप्रवृत्तिरुपलब्धा ॥

त्रिज० ॥ कणिट्ठमादामह पुरदो जेव्व को वि मक्कडपर-

माणू तीए समं मन्तअन्तो दिट्ठो तीए वि उम्मोचिअ केसा-हरणं अहिण्णाणं ति तस्स हत्थे समप्पिदं एत्तिअं जाणामि ॥

माल्य० ॥ किं न पर्याप्तं ॥ साशङ्कं ॥ एतेनैव कपिपरमा-णुना तावदेवमनुष्ठितं। एवं परःशताः कोट्यः श्रूयन्ते संप्रति सुग्रीवभुजवलपरिपालिते कपिसर्ग्गे॥

त्रिज० ॥ सवितर्कं॥ कहं तारिसी सुउमारदंसणा वि सुसि-णिद्धवाहारा वि माणुसी वि सीदा अम्हाणं रक्खसाणं वि रक्खसी जादा ॥

माल्य० ॥ वत्से युज्यतेऽपि।

पतिव्रतामयं ज्योतिः शान्तं दीप्तं च घुष्यते।

विमृश्य ॥ अथवा । किं नाम सा वराकी।

दुष्कर्म्मणां परीपाकः स्वयमेवैष दीप्यते ॥ ६ ॥

त्रिज० ॥ कणिट्ठमादामह पठमं खु इह दण्डकारण्णपेरन्त-परिट्ठिदविविहमहीहरप्पदेसेसु णिवासो जेव्व अम्हाणं रक्ख-साणं विहारा क्खु णिखिलम्मि जम्बूडीपे संपदं खु इह णअरे वि अक्खमो णिवासो का गई को पडिआरो॥

माल्य० ॥ वत्से । किमेवमतिकातरासि । पश्य।

दुर्गोऽयं चित्रकूटस्तदुपरि नगरं सप्तधातुप्रकार

प्राकारं दुस्तरैषा निरवधिमरिखाप्यब्धिरभ्रंकषोर्म्मिः॥

विमृश्य ॥ अथवा किमनेन।

दोर्दण्डा एव दृप्यद्रिपुदलनमहासत्त्वदीक्षाप्रतीक्षाः।

रक्षोनाथस्य॥

॥ वामाक्षिस्पन्दनं सूचयन् । सव्यथं ॥

किं नो विधिरिह वचनेऽप्यक्षमो दुर्विपाकः ॥ ७ ॥

वत्से । वत्सस्य कुम्भकर्णस्य निद्रापगमसीम्नः कियदवशिष्टं ॥

त्रिज० ॥ कणिट्ठमादामह अस्सिं जेव्व कसणचउद्दहीदिअहे चउत्थो मासो परिसमत्तो ॥

माल्य० ॥ कथमद्यापि विप्रकृष्टतमः किल प्रबोधकालः । सस्मरणं । विमृश्यमाने तु दिष्ट्या कनिष्ठवत्स एव दूरदर्शी यस्याविमृश्यकारितापि शुभोदर्का सुबहुशोऽप्यभिसंधीयमाने कुलप्रतिष्ठातन्तुं तमेवोत्पश्यामि ॥

त्रिज० ॥ ससंभ्रमं ॥ कणिट्ठमादामह हद्धी हद्धी संतं पावं पडिहदममङ्गलं ॥

माल्य० ॥ किमिति ॥

त्रिज० ॥ कणिट्ठमादामहस्स अअं णअवअणोवण्णासो अणस्सिं जेव्व कस्सिं अमङ्गले जेव्व विस्संतो ॥

माल्य० ॥ वत्से नैतदनुसंधायोक्तं । एवं किलावलीयते । यतः ।

न कुत्राप्यन्यत्रप्रबलभवितव्यादयमहो
विशुद्धैवोत्पत्त्या पतति न च तत्पापधिषणा ।
यथा स्वैरं भ्राम्यन्निरवधिवियत्यस्तशिखरं
व्युदस्यायं भास्वांस्तदनुगतघस्राच्चिरपि सा ॥ ८ ॥

तदत्र प्रतीकारेषु केवलं मतिसंधानजृम्भितमवशिष्यते । कृतमनेन वत्से अवैषि किमुपक्रमस्तावद्देवदशकन्धरः ॥

त्रिज० ॥ कणिट्ठमादामह सामी क्खु संपदं सव्वत्तोभद्दं णाम अट्टालअं आरुहिअ तीए रक्खसकुलकालरत्तीए अधिट्ठिदं असोअवणिअं जेव्व पुलोअन्तो चिट्ठदि। अणं अ इहिसुहं पउत्ता एसा पउत्ती सुदा। एदं णअरवुत्तन्तं अणुहविअ किं वि दुम्मणाअन्ती सामिणी पडिवोहेउं तहिं जेव्व पत्थिदेत्ति ॥

माल्य० ॥ वत्से स्त्रीत्वेऽपि वरं सा खलु देवी मन्दोदरी यन्मतिः प्रतिबोधनायोत्तास्यति। न पुनर्देवो यः प्रतिबोधितोऽप्यापि न बुध्यते तदेहि तावदभ्यन्तरं प्रविश्य प्रणिधिकृत्यं विचारयामः ॥ इति निष्क्रान्तौ ॥

॥ विष्कम्भकः ॥

॥ ततः प्रविशति सोत्कण्ठो रावणः ॥

सीतां विभाव्य।

> मुखं यदि किमिन्दुना यदि चलांचले लोचने
> किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवौ।
> किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः
> किमम्बुरुह उम्बरैर्यदि तनूरियं किं श्रिया ॥ १॥

सस्मरणोल्लासं ॥ अहो हलमुखविनिर्भिन्नविश्वंभराविर्भूतयोषिद्रत्नमनुभवतो मम मनोरथेन चिराय फलितं ॥ विमृश्य ॥ अनुकूलस्य विधेः किलायं विश्वासः। सगर्वं। अथवा क एष विधिरपि।

पिष्ट्वा ब्रह्माण्डमस्मादथ भुवनविभागाद्बुदस्यापि किंचि
द्ब्रह्माणं चाधिकृत्याप्रतिमरुचितरं स्वं प्रतापं यशश्च।
सूर्य्येन्दू संविधाय स्वयमधिकतरं निर्वृतः स्यामहं चे
न्न स्यादालस्यदोषः सकरुणमथवा कोऽनुकम्प्येषु कोपः ॥१०॥

॥ ततः प्रविशति मन्दोदरी चेटी च ॥

चेटी॥ इदो भट्टिणी एदं अ राअअसोवाणमग्गदुआरअं ता आरोहदु भट्टिणी॥

मन्दो०॥ सोपानारोहणं नाटयित्वा। रावणं निरूप्य॥ कहं एसो महाराअदसकन्धरो उवविट्टो वट्टदि॥ निर्वर्ण्य॥ कहं असोअवणिआसंमुहं पुलोएदि ॥ सखेदं॥ कहं ईरिसे वि रिउवक्खाहिओए संवत्ते राअकज्जाणक्खेवो लक्खीअदि महाराअदसकन्धरो त्ति॥ उपसृत्य॥ जेदु जेदु महाराअदसकन्धरो॥

राव०॥ आकारसंवरणं नाटयित्वा॥ कथं मन्दोदरी॥ इति पार्श्वे समुपवेशयति॥

मन्दो०॥ तथा कृत्वा॥ महाराअ किं एत्थ चिन्तिदं॥

राव०॥ कुत्र॥

मन्दो०॥ रिउवक्खाहिओए॥

राव०॥ सोत्प्रासं॥ कथं रिपुस्तत्पक्षस्तदभियोगश्चेत्यश्रुतं श्राव्यते देव्या॥

योऽहं द्वाभ्यां भुजाभ्यां मृधभुवि युगपन्मत्तदिग्दन्तिदन्तान्
रुद्ध्वा दोर्भिश्चतुर्भिः सरभसमजितान्दिक्पतीनप्यरौत्सं।

दीप्यद्वज्रादिचण्डप्रहरणपतनक्षुण्णवक्षस्त्वचो मे
तस्यापि प्रातिभट्यादृिपुरिति कलितः कोऽप्यपूर्वः प्रमादः॥११॥
भवतु तथापि श्रोतव्यं । देवि स कः ॥

मन्दो॰॥ णिखिलवलीमुहचक्काणुगदसुग्गीवग्गेसरो सह-कणिट्ठो दासरही रामो त्ति सुणीअदि ॥

राव॰॥ किं सहानुजस्तापसः । देवि किंगतेन ते तैर्वा सः ॥

मन्दो॰॥ महाराअ समुदाओ क्खु सकीअदि । अवरं अ साअरवेलासु सेणां विणिवेसिअ आहूदो ऐोण साअरो ण णिग्गदो भवणादो त्ति । तदा तु ॥ संस्कृतमाश्रित्य ॥

प्रायुङ्क्तास्त्रं स किंचिज्जलनिधिकुहरे यन्महिम्ना क्षणार्द्धा
दावृत्त्यावृत्त्य चक्रभ्रममखिलमभूत्क्वाथतः शोणमम्भः ।
उन्मूर्च्छन्नक्रचक्रं झटिति परिदलत्कच्छपौघं प्रमुह्य
त्भूयः पाथो मनुष्यं स्फुटदतुलरवं प्रस्फुटच्छङ्खशुक्ति ॥ १२ ॥

राव॰॥ सावज्ञं ॥ किं ततः ॥

मन्दो॰॥ महाराअ तदो अ पुंखमेत्तपेक्खिज्जमाणतिक्ख-सरणिअरपम्हलिदसरीरेण णिक्कमिअ सलिलादो सवादव-डणं अब्भत्थिअ मग्गो उवदिट्ठो । साहसिएण उण तेण मा हिज्जवित्ती सुणीअदि ॥

राव॰॥ सहासं ॥ अस्तु श्रूयते । देवि कीदृशः ॥

मन्दो॰॥ महाराअ वलीमुहसहस्साणीदेहिं महीहरेहिं सेटू णिम्मोअदि ॥

राव०॥ देवि विप्रलब्धासि केनचित्। अकलितगाम्भीर्य्यमहिमा किलायं पाथोनाथः।

जम्बूद्वीपेऽथवान्येषु द्वीपेष्वपि महीधराः।
यावन्तस्तैः कुक्षिकोणोऽप्यस्य न भ्रियते किल ॥ १३ ॥

अपिच। साहसिकेनेति वदन्त्या देव्या विस्मृतप्रायं। मत्साहसे तु।

उत्पुष्यज्जलधमनिस्फुटप्रसर्प्प
त्प्रत्यग्रक्षतजभरीनिवृत्तपाद्यः।
हर्षाश्रुप्रचुरमधुस्मितस्फुटश्री
र्वक्राब्जार्च्चितचरणः शिवः प्रमाणं ॥ १४ ॥

मन्दो०॥ महाराअ ओधारेहि किं वि अणारिसी रअणा कस्स वि वलीमुहस्स हत्थपुणदो उवरि जेव्व चिट्ठंदि ते महीहरा जलम्मि त्ति॥

राव०॥ सशिरःकम्पं॥ इदं तदप्रतीकार्य्यं मौग्ध्यमवलानां। यन्नावाणोऽपि प्लवन्त इति। देवि किं वहुनोक्तेन।

श्रुतं मे जानाति श्रुतिकविरथाज्ञां सहचरः
स शच्या धैर्य्यं चाशनिरथ यशोऽदस्त्रिभुवनं।
बलं कैलासाद्रिः किमपरमहो साहसमपि
क्षरत्कीलालाम्भःस्नपितचरणः खण्डपरशुः ॥ १५ ॥

॥ नेपथ्ये महान्कलकलः ॥

मन्दो०॥ महाराअ परित्ताहि २ ॥ इति सत्रासमुदीक्षते ॥

राव०॥ देवि अलं शङ्कया।

॥ पुनर्नेपथ्ये ॥

भो भो लङ्काद्वाररक्षिणो राक्षसगणाः ॥
दत्त द्वाराणि तूर्णं सरलतरगुरुश्मसाराग्गलाश्च
क्षिपन्तांच्छस्त्रजातं तदुपरि नयत स्वान्ययींश्चावधत्त ।
रुन्धध्वं निर्विषासूञ्शिशुयुवतिजनान्वीवधांश्चाद्रियध्वं
प्राप्तः सुग्रीवमुख्यप्लवगपरिवृतः सानुजो रामभद्रः ॥ १६ ॥

॥ नेपथ्येऽर्द्धे प्रविष्टा प्रतीहारी ॥

प्रती° ॥ भट्ट । एसो पडिहारभूमिए चिट्ठदि सेणावई पहत्थो विण्णविदुकामो ॥

राव° ॥ कथं । सेनापतिः प्रहस्तः । प्रवेशय ॥

प्रती° ॥ तहा ॥ इति निष्क्रान्ता ॥

॥ ततः प्रविशति प्रहस्तः ॥

प्रह° ॥ अहो मनुष्यपोतस्य तावदत्यूर्ज्जस्वलं चरितं । तथाहि ।

भीष्मं गोष्पदवद्विलङ्घ्य परितः कल्लोलमालाकुलं
पाथोनाथमुपेत्य मन्थरतरं लङ्कानिबद्धेक्षणः
स्कन्धावारमसौ निवेश्य विषमे सौवेलमूर्द्ध्नि स्वयं
कैश्चिद्वानरपुङ्गवैः परिवृतोऽध्यास्ते पुरः प्राङ्गणं ॥ १७ ॥

पुरो निरूप्य ॥ कथमयं लङ्केश्वरः ॥

राव° ॥ भद्र सेनापते किंहेतुरयं कलकलः ॥

प्रह° ॥ स्वगतं ॥ कथमद्याप्यनभिज्ञ एव देवः । भवतु कार्य्यमात्रं विज्ञापयामि ॥ प्रकाशं ॥

पुरं निःशेषघटितं कपाटद्वारमावृतं ।
रक्षा चाप्तैर्भक्तिमद्भिः कौणपैः परितः कृता ॥ १८ ॥

राव० ॥ किमिति ॥

प्रह० ॥ स्वगतं ॥ कथं सैवावस्था भवतु ॥ प्रकाशं ॥ देव लङ्केश्वर ।

मनुष्यपोतमात्रेण सानुजेन पुरी तव ।
रुध्यते स्म यथासारं वीवधाद्यपि दुर्लभं ॥ १९ ॥

॥ प्रविश्य प्रतीहारी ॥

प्रती० ॥ भट्ट । एसो को वि वलीमुहो रामस्स दूदो त्ति भणिअ पडीहारदेसे चिट्ठदि ॥

राव० ॥ सावज्ञं ॥ वलीमुखं प्रवेशय ॥

प्रती० ॥ तहा ॥ इति निष्क्रम्याङ्गदेन सह प्रविश्य तं प्रति ॥ एसो भट्टो । उवसप्प ॥

अङ्ग० ॥ उपसृत्य ॥ जयति जयति परममाहेश्वरो लङ्केश्वरः ॥

राव० ॥ सुग्रीवानुचरो भवान् ॥

अङ्ग० ॥ न हि न हि ॥

राव० ॥ तर्हि कस्य ॥

अङ्ग० ॥ लङ्केश्वर श्रूयतां यो ऽहं यदर्थमागतश्च ।

दृप्यद्राक्षसचक्रकाननमहादावानलस्याज्ञया
दूतो दाशरथेस्तदीयवचसा त्वामागतः शासितुं ।
सीतां मुञ्च भजावरोधनसुहृद्दायादपुत्रान्वितः
सौमित्रेश्चरणौ न चेत्तदिषुभिः शासिष्यसे दुर्मदः ॥ २० ॥

राव० ॥ सहासं ॥ वलीमुखोऽपि वाचाटः किं वक्तव्यं ॥

अङ्ग० ॥ अहं यत्किंचित्स्यां । त्वं तु सिद्धान्तमेवावधारय ॥

तत्पादाब्जनखं किंवा तत्तीक्ष्णेषुमुखं नताः ।

अष्टावस्तेऽद्य मूर्द्धानस्तयोरभिमतं वद ॥ २१ ॥

राव० ॥ सक्रोधं ॥ कः कोऽत्र भोः यत्किंचिद्वादिनाऽस्य मुखं संस्कुर्य्यात् ॥

प्रह० ॥ देव दूतः किलायं किमत्र क्रोधेन ॥

राव० ॥ एतन्मुखसंस्कार एव तपस्विनः प्रत्युत्तरीकरणं ॥

अङ्ग० ॥ उद्रोमकूपस्फुरणमभिनीय ॥

यथासंख्यं तीक्ष्णक्रकचविषमक्रूरनखर

प्रगल्भव्यापारप्रमथितशिरोवन्धशिथिलैः ।

शिरोभिस्ते दिग्भ्यो वलिमनुपहृत्यैव किमहं

निवर्त्ते यत्स्यां चेन्न रघुपतिदूत्येन परवान् ॥ २२ ॥

॥ इत्याप्लुत्य निष्क्रान्तः ॥

राव० ॥ निरूप्य ॥ अहो जातिसुलभं चापलमप्रतीकार्य्यं ॥

प्रह० ॥ देव निदेशाक्षरमालिकापरिग्रहायोत्कण्ठते हृदयं ॥

राव० ॥ किमत्रापि प्रष्टव्यो निदेशः ।

त्रोट्यन्तामभितोऽर्गलानि भुवनप्रख्यातसारोद्धतैः

पाट्यन्तां परितो रणानि च परव्याक्षेपिभी राक्षसैः ।

मथ्नन्तां रिपुघस्मरप्रहरणं विक्षोभ्य भङ्ग्या भुजाः

खण्ड्यन्तां च मुहुर्विवल्गनवृथोत्थानोत्कटा मर्क्कटाः ॥ २३ ॥

प्रह॰ ॥ यदाज्ञापयति महाराजः ॥ इति निष्क्रान्तः ॥

॥ नेपथ्ये महान्कलकलः । सर्व्वे ससंभ्रममाकर्णयन्ति ॥

॥ पुनर्नेपथ्ये ॥

वध्यन्ते ऽस्रपपुङ्गवाः प्रतिभयाभोगैः प्लवङ्गाधिपै
र्वध्यन्ते च वितर्द्दिकाः प्रतिदिशं कृत्तैरदोमूर्द्धभिः ।
छिद्यन्ते च वहिः प्रपित्सव इमे मध्ये क्रुधान्धाः क्षणा
च्छिद्यन्ते पुरगोपुराः प्रतिदिशं क्षिप्तैश्च गण्डोपलैः ॥ २४ ॥

राव॰ ॥ ऊर्द्धमवलोक्य सक्रोधमुत्प्रेक्ष्यच ॥ कथमेते तपस्विपक्षपातादनात्मज्ञा वासवपुरःसरा दिवौकसोऽपि मत्सरिणो विक्षोभ्यन्ते । तद्देवि त्वमभ्यन्तरे प्रविश । अहमपि तावत् ।

कैश्चिद्दोर्भिः प्रमत्तान्प्लवगपरिवृढान्दिक्षु विक्षिप्य दक्षै
रन्यैः पिष्ट्वापि युद्धाभिनयविधिनटौ तौ तपस्विप्ररोहौ ।
शिष्टैः कृष्ट्वा स्वचेतःप्रतिफलितवृथारन्ध्रमात्रप्रविष्टा
न्दुष्टान्त्रैविष्टपानप्यपगतकरुणस्तैर्विभर्म्मि स्वकारां ॥ २५ ॥

॥ इति विकटं परिक्रम्य निष्क्रान्तः ॥

॥ ततः प्रविशति रथेन सपरिवारो वासवः सूतश्च मातलिः ॥

मात॰ ॥ देव दिवस्पते यथा तावदधिलङ्कमेषः
संवर्त्तप्रकटविवर्त्तसप्तपाथो
नाथोर्म्मिव्यतिकरविभ्रमप्रचण्डः ।
निर्घोषः स्फुरति भृशं परःसहस्र
व्यावल्गत्प्रबलगतागतास्त्रपाणां ॥ २६ ॥

तथा तर्क्कये युयुत्सया निर्यियासति नक्तंचरचक्रवर्त्तीति ॥

वास॰ ॥ सूत पश्य पश्य ।

दृढतरमभियोगं वीक्ष्य रक्षोविनेता
सह तनुजसगर्भप्रेष्यरक्षःसहस्रैः ।
सरभसमरराशि द्रागपावृत्त्य विद्रा
वितनिखिलवनौका निर्गतोऽयं नगर्य्याः ॥ २७ ॥

अन्तरिक्षे नाटयित्वा ॥ आः क एषः कौवेर्य्याः ककुभः क्वणत्कनककिङ्किणीजालमालिना विमानेन सरभसमित एवाभ्येति ॥

सूतः ॥ निर्वर्ण्य ॥ देव भवतैव गन्धर्व्वराज्याधिपत्याभिषेककृतमहाप्रसादश्चित्ररथः ॥

॥ ततः प्रविशति विमानाधिरूढश्चित्ररथः ॥

चित्र॰ ॥ जयति जयति देवराजः ॥

वास॰ ॥ गन्धर्व्वराज समरदिदृक्षानिर्भरं किं चेतः ॥

चित्र॰ ॥ तदप्यन्यदपि ॥

वास॰ ॥ किमन्यत् ॥

चित्र॰ ॥ अलकेश्वरनिदेशः ॥

वास॰ ॥ कीदृशः ॥

चित्र॰ ॥ दुर्वोधो जनिदिवसान्मम प्रवृद्धः
कोऽप्याधिः प्रवलतमोऽथवा त्रिलोक्याः ।
तस्येदं निधनदिनं विधेर्विलासा
त्कल्याणी परिणतिरस्तु वान्यथा वा ॥ २८ ॥

तदवगन्तुमहं प्रहितः ॥

वास॰॥ सकुल्यानामप्येष मनोरथः॥

चित्र॰॥ किं चित्रं सहजाः किल ते मिथः शत्रवः। कृत्रिमतापि निधिपुष्पकादिहरणवृत्तेर्दुर्वृत्तस्य सुप्रथिता। अथवा।

> यावत्त्रिलोक्यं किल जन्तुजातं
> तत्सर्वमस्योद्धतदुश्चरित्रैः।
> कदर्थितं श्रीरघुनन्दनस्य
> प्रीत्या विधत्ते विजयप्रतीक्षां॥२९॥

वास॰॥ निरूप्य॥ गन्धर्व्वराज यदिदमधित्यकातः सुवेलाद्रेरकाण्ड एवं प्रबलकिलिकिलाकोलाहलमुखरितहरिन्मुखं वलीमुखचक्रमक्रममेवोच्चलितं। तथा मन्ये पतितमेव प्रहरणैरिति॥

चित्र॰॥ देवराज पश्य पश्य।

> अयं रक्षोनाथः क्षितिधरशिरोबन्धुरतरे
> रथे तिष्ठन्प्रष्ठः प्रधनरसनिष्णातमनसां।
> मुहुर्ज्जीवाघोषैर्बधिरयति दिक्प्रान्तशिखरि
> प्रतिध्वानाध्मातैर्गगनविवराभोगमभितः॥३०॥

वास॰॥ गन्धर्व्वराज न तुलाधृतस्तावदनयोर्वीरसमयोचितः परिकरः॥ सावेगं॥ सूत सूत सांग्रामिकं मे रथमुपहर रामभद्राय। अहमपि गन्धर्व्वराजाधिष्ठितं विमानमेवाधितिष्ठामि॥ तथा करोति॥

सूतः॥ यदाज्ञापयति देवः॥ इति निष्क्रान्तः॥

चित्र॰ ॥ देवराज कथमतिसंधेयं तुमुलं । तथा हि ।

रक्षोभिर्विपिनौकसां परिवृढैश्चारादपास्तक्रमं
मुष्टामुष्टिकचाकचिप्रहरणप्रक्षेपमूढात्मभिः ।
प्रारब्धं रणकर्म्म दुर्धरमिथो निष्पेषशीर्य्यद्वपु
र्निश्च्यूतासृग्झरीभिरेव सरणिर्दुःसंचराभूद्यथा ॥ ३१ ॥

अपिच ।

वीराणां खड्गतुण्डप्रविघटनपटुस्फारदोर्दण्डखण्ड
व्यापारक्षिप्यमाणप्रतिभटविकटाटोपवर्ष्मप्ररूढः ।
कूटः कोऽप्येष युद्धाजिरभुवि जरठश्चित्रकूटानुकारी
लीयन्ते यत्र शत्रुप्रपतनविवशाः कोटिशः शूरकीटाः ॥ ३२ ॥

वास॰ ॥ गन्धर्व्वराज इत इतः ॥

प्रासप्रोतप्रवीरोल्वणरुधिरपरामृष्टवृक्काजिघत्सा
धावद्गृध्राधिराजाप्रतिमतनुरुहच्छायया वारितोत्थाः ।
विश्राम्यन्ति क्षणार्द्धं प्रधनपरिसरेष्वेव मुक्ताभियोगा
धीराः शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गाः ॥ ३३ ॥

इतोऽपि ।

प्रतीक्षन्ते धीराः प्रतिमुखमुरोभिः सरभसं
विपक्षाणां हेतोः प्रतिनियतधैर्य्यानुभवतः ।
विदीर्णत्वग्भारादलितपिशिताश्छिन्नधमनि
प्रकाण्डास्थिस्नायुस्फुटतरविलक्ष्यान्त्रनिवहाः ॥ ३४ ॥

चित्र॰ ॥ देवराज अपूर्व्वोऽयं रक्षःपतेः संग्रामावतरण-
सर्गः । तथाहि ।

प्रेष्याः संग्रामसीमन्यनुजशतवृतो मेघनादोऽपि पार्श्वे
वामेऽन्यत्र प्रवीरैरवतिविषममदोद्बोधितः कुम्भकर्णः।
कैकस्या बन्धुवर्गोऽप्ययमतिविकटः पृष्ठतस्तिष्ठमानो
ध्यास्ते मध्ये निषण्णो रथशिरसि भृशं विन्ध्यवद्दुर्विगाहः॥३५॥

वास०॥ गन्धर्व्वराज एवमभियोगोद्धुरं द्विषं तमभिवीक्ष्यापि निष्प्रकम्प एव रामभद्रः अथवोचितमेवैतत्। यतः।

न कम्पन्ते झंझामरुति किल वाति प्रतिदिशं
समुन्मूर्च्छत्साराः कुलशिखरिणः किंचिदपि ते।
न मर्य्यादां तेऽपि प्रति जहति गाम्भीर्य्यगरिम
स्फुरद्वार्ब्रह्माणोऽकलितमहिमानोऽम्बुनिधयः॥३६॥

चित्र०॥ देवराज पश्य।

भक्तिप्रह्वं कथमपि यवीयांसमुत्सृज्य चापा
रोपव्यग्राङ्गुलिकिसलयं मेघनादक्षयाय।
लक्षीकृत्य प्रधनकुशलं सानुजं राक्षसेन्द्रं
जीवां भूयो रघुपतिवृषा स्पर्शतः संस्करोति॥३७॥

कथमेतदतिदुष्करमिव मन्ये। तथाहि।

आक्रम्यैकैकमेते रजनिचरभटाः कोटिशः शस्त्रवर्षै
र्भास्वद्वंशप्ररोहं पिदधति परितः सत्क्रियायोगपद्याः।

अथवा किं नाम दुष्करं।

एतावप्युग्रभावावकलितमहिमाप्राभवौ युद्धभूमा
विन्धाते शत्रुशस्त्रप्रविदलनफलस्पष्टबाणाभियोगौ॥३८॥

समन्ततोऽवलोक्य॥ अहो कथमेते वनौकसो महति सपत्नसङ्गरे

स्वामिधानयोगमेव ख्यापयन्तः पञ्चषाः केवलं रामभद्रपा-
दमूलमासेवन्ते । तथाहि ।

सुग्रीवः स्यन्दनस्याग्रे सोऽङ्गदः पृष्ठतः पुनः ।
पञ्चषा जीववान्भावी लङ्काधीशोऽपि पार्श्वयोः ॥ ३९ ॥

विचिन्त्य ॥ हनूमान्पुनः कनीयांसं काकुत्स्थं ॥ सविमर्शं ॥ वरमेत
एवोभयथा रामभद्रपादपद्मोपसेविनः । यतस्तावदेतेषां ।

स्वामिभक्तिश्च धैर्य्यं च व्याख्याते गात्रमक्षतं ।
रक्षोऽभियोगस्त्वन्येषां दृश्यते दैन्यमप्यलं ॥ ४० ॥

वास० ॥ गन्धर्व्वराज मानुषे लोके वात्सल्यं नाम केवल-
मखिलेन्द्रियवशीकरणचूर्णमुष्टिः यतः ।

सौमित्रिः कृतहस्तताप्रभृतिभिर्न्यूनो न कैश्चिद्गुणैः
सारेणापि पुनः प्रसिद्धमहिमा शौर्य्याग्रणी रावणिः
इत्थं तुल्यतरे किल व्यतिकरे रामस्य रक्षःप्रभो
श्चान्योन्यं शरवृष्टिरेव वलते दृष्टिस्तयोर्वत्सला ॥ ४१ ॥

चित्र० ॥ देवराज युक्तमेवैतदेवं वात्सल्यमनुरुध्यन्ते किल
महात्मानः साद्भुतौत्सुक्यं । पश्यतु देवराजः ।

सौमित्रेर्बाणवज्रैरधिकतरममी मर्म्मवेधं प्रविद्धाः
धावन्तः क्ष्माधरेन्द्रा इव रजनिचराः शेरते युद्धसीम्नि
रक्षोनाथोऽपि पुत्रान्कतिचनपतितान्वीक्ष्य रामाभियोगं
संत्यज्यानिष्टशङ्की निपतति तरसा मेघनादोपकण्ठं ॥ ४२ ॥

तदेतदत्याहितमाशङ्के ॥

वास० ॥ गन्धर्व्वराज किमत्र नामात्याहितं । अपरिच्छेद्य-महिमानः किलैते ककुत्स्थकुलप्ररोहाः । तथाहि ।

परःसहस्रं रजनीचरेन्द्रा यथास्य वीरस्य किलैकलक्ष्यं
तथा रणेष्वद्भुतवीरगोष्ठीभूषायमाणो दशकन्धरोऽपि ॥ ४३ ॥

चित्र० ॥ देवराज बहुभिरेकस्याभियोगेऽपि शुभोदर्कतेत्ये-तदबहुव्यक्ति निष्ठं ॥ सचमत्कारं ॥ इतोऽवधत्तां देवराजः ।

रक्षोनाथे सरभसमितो निर्गते विग्रहेच्छुः
क्षुभ्यत्युच्चै रघुपतिशरैः कीलितः कुम्भकर्णः ।
कुम्भोऽप्येतां पितुरुपनतां वीक्ष्यवस्थां वपुष्मा
न्गर्व्वैः किंवा निपतति जवाज्जङ्गमः क्ष्माधरेन्द्रः ॥ ४४ ॥

साद्भुतं ॥ अहो छिद्रसांचारिता मर्क्कटजातेः । यतः ।

उद्दिश्याराद्दशरथकुलाङ्कुरमाद्यं पतन्तं
सत्यं कुम्भं मृधभुवि कपिः कोऽपि मध्ये रुरोध ।

सविशेषं निर्वर्ण्य ॥ कथं सुग्रीव एव ॥ सविचिकित्सं ॥

दोस्तम्भाभ्यां सरभसमथापीड्य विक्षिप्य भूमौ
क्रान्त्वाप्येनं प्रतिघविवशो माषपेषं पिपेष ॥ ४५ ॥

साशङ्कं ॥ एतन्निरीक्ष्य निपपात च कुम्भकर्णः
सुग्रीवमुग्रतरविद्रुतिरग्रहीच्च ।
उन्मोच्य सोऽपि निपुणः स्वममुष्य नासां
लज्जां स्वसुश्चयुगपत्किल निश्चकर्त्त ॥ ४६ ॥

वास० ॥ गन्धर्व्वराज इत इतः ।

लघुरघुपतिरेष राक्षसाना
मधिभुवि किं च कुमारमेघनादे
किमपि चरितमद्भुतं व्यतानी
त्सपदि यथा प्रतिघान्धतामधातां ॥ ४७ ॥

अहह । इदमतिदुष्करं प्रतिसंविधानमापतितमस्य रघुशिशोः । तथा हि ।

यावन्मन्त्रप्रभावादनधिगमगतीन्मेघनादप्रणुन्ना
न्दुर्भेद्यान्नागपाशान्विहगपरिवृढोऽस्त्रप्रयोगाद्व्यधूनोत् ।
तावद्रक्षोविनेत्रा पुनरतिरभसं मर्म्मणि क्रोधभूम्ना
गाढं विद्धः शतघ्न्या हनुमति सहसा मोहनिघ्नो न्यपप्तत् ॥ ४८ ॥

चित्र० ॥ देवराज अयमत्राद्भुततरो विमर्द्दः । यदा तु भ्रातुर्मोहमधिगम्य भाविलङ्केश्वरादक्रममेव करुणवीरानुभावभावितचित्तवृत्तिस्तथाविधस्यापि दर्शनोत्सुकः समरुध्यत परितः कुम्भकर्णप्रमुखया रक्षःपृतनया । तदा पुनरिदमेव प्रत्यकार्षीत् । तथाहि ।

पुरां जेता पूर्व्वं त्रिपुरविजये यामुदवह
त्स्थितिं तामेवाद्य रघुपतिवृषाश्रित्य वपुषा ।
क्षणाद्रक्षोनाथानुजमिषुभिराच्छिद्य कर्णाश
श्रमूं भस्मीकृत्याप्यनुजमभियात्युत्सुकतमः ॥ ४९ ॥

निर्वर्ण्य ॥ अहो वात्सल्यमहिमा रघुपुङ्गवस्य । येन पुनर्विषयीकृतमात्रामेवानुजस्यावस्थामभिजानाति स्म ॥ परितो निरूप्य । सहर्षं ॥ दिष्ट्या स्वस्ति रघुकुलकुमाराभ्यामेताभ्यामुत्प-

श्यामि । यतस्तावदेतयोरन्यस्मिन्व्यसनमहार्णवे यातुधानाधीशेनापि सपरिवारेण कुम्भकर्णवधात्संभ्रान्तं ॥ पुनरेतौ निर्वर्ण्य ॥ कथमद्यापि प्रमुग्धावेव विषमो ध्यानव्यतिकरस्तावदापतितः । यतः ।

बहुच्छलानि रक्षांसि रिपवस्त्ववशौ स्वयं ।
एषावस्थापि कपयः सहायास्तेऽपि विक्लवाः ॥ ५० ॥

तत्किमुपक्रमं दैवमत्रेति न जाने ॥

वास० ॥ गन्धर्व्वराज किमेवमाशङ्कसे । पश्य । जीवत्प्रतिबोधितः किलायमचिन्त्यमहिम्ना प्रथमः प्राभंजनिः । संप्रति

उत्स्फूर्ज्जद्रोमकूपः प्रलयपरिमिलत्पांशुवर्षानुकारी
किंचिद्भुग्नाग्रपुच्छाप्रतिमविचलनापास्तनक्षत्रचक्रः ।
भूम्नौत्सुक्यानुरूपव्यवसितिरधिकं पर्यवप्लुत्य गत्वा
क्वापि प्राज्ञः क्षणार्द्धात्कमपि गिरिमसावाहरन्नाजगाम ॥ ५१ ॥

चित्र० ॥ विभाव्य सोल्लासं ॥ देवराज पश्य ।

यथा चन्द्रालोकं कुमुदनिवहश्चुम्बकमणिं
दृषत्सारस्तस्वामृतमपि भवाम्भोनिधिगतः ।
तथा संभाव्ये तौ हनुमदुपनीताद्रिमरुतं
झटित्युज्जृम्भेते किमपि गहनो वस्तुमहिमा ॥ ५२ ॥

दक्षिणतो विभाव्य ॥ कथमेष लङ्केश्वरः । कल्पनावसाननिर्मर्य्यादं पाथ इव पाथोनाथस्य राक्षसबलमाकर्षत्पुनरभ्यमित्रमेति ॥ विमृश्य ॥ संप्रति तु धर्म्मयुद्धसंभावनाप्रतिहतबहुतरप्रधानव्यक्ति रावणमेघनादशेषमेतद्राक्षसबलमेताभ्यामवगणितमि-

त्येतावप्युभौ न गणयन्ते परःसहस्रमप्यस्रपकीटाः । पुनर्लक्ष्मणं निर्वर्ण्य । एवं तु

शाणोत्कीर्णो मणिरिव घनाम्भोदमुक्तो विवस्वा
न्निःकोशोऽसिर्भ्रेदिति विगलत्कञ्चुकः पन्नगेन्द्रः ।
दीव्यत्युच्चैर्लघुरघुपतिः किंनु वा स्यात्किमन्य
द्दिव्यौषध्या जयति महिमा कोऽप्यचिन्त्यानुभावः ॥ ५३ ॥

निरूप्य ॥ कथं प्रक्रान्तमेव कपिराक्षसनासीरचरयोर्भटयोः पुनरायोधनं । तथाहि ।

शितैर्बाणैरेके मृधभुवि परे तीक्ष्णनखरैः
क्रियासातत्येनाप्यहमहमिकाक्रान्तमनसः ।
मिथो विध्यन्ति स्म प्रबलतमसंमर्द्दविदल
त्क्षितिक्षोदः पिष्टातकसुरभिवक्षस्तटभृतः ॥ ५४ ॥

सविशेषं निरूप्य ॥ तावदन्तरमनयोर्बलयोरधिगम्यमानं प्रातःसंध्ययोर्यावदन्धतमसारुणालोकयोः । तथाहि ।

प्रतिक्षणमियं रक्षःपृतना क्षीयतेतरां ।
यथा तथा प्लवङ्गानामनन्तगुणतैधते ॥ ५५ ॥

वास० ॥ गन्धर्वराज पुनरितो महत्कदनमुपक्रान्तं ।

रक्षोनाथो रघूणां त्वरितमधिभुवा रावणिर्लक्ष्मणेन
द्वन्द्वीभूय प्रहृष्यद्भुजबलमहिमाविष्कृतेष्वासशिक्षौ ।
दिव्यास्त्राणां प्रयोगप्रतिकृतिमुचितां चाप्नुवानौ मिथोऽमू
मूर्छत्कल्पावसानज्वलनपरिभवं सैन्ययोः पर्यदातां ॥ ५६ ॥

चित्र० ॥ देवराज दुरवबोधोऽयमनयोर्महावीरयोर्मिथोविमर्द्दः ।

तथाहि।

क्ष्वेडाभिः ककुभः पृषत्कनिकरैर्व्योम द्विधाखण्डते
देहैर्विद्विषतां धरातलमपि प्रच्छादयन्तौ चिरं।
कुर्वाते ऽश्रुजलाविलेक्षणपथान्येतावकाण्डोच्चर
द्रोमाञ्चानि सवेपथून्यपि सुहृद्वर्ष्माणि नः पश्यतां॥५७॥

सविशेषं विभाव्य ॥ कथं प्रत्यक्षानुमानाभ्यामुपलभ्यमानमेकमेव वस्तु विप्रकृष्टान्तरं संपद्यते। तथाहि।

अस्माद्रावणवृत्ताद्राघववृत्तं तु दशगुणं वीक्षे।
अनुमन्ये ऽनन्तगुणं पार्श्वपतत्कौणपेन्द्रविनिपातैः॥५८॥

परितो निरूप्य। सकुतुकाश्चर्यं ॥

यावन्तो रजनीचराः प्रहरणोन्मूर्द्धभुजाः केतवो
युध्यन्तो ऽभिमुखाः स्फुरद्भुजमदाध्माताः पुरो निर्गताः।
प्रक्षिप्ताशुगजालपक्षपवनाधूते प्रतापानले
चित्रं दाशरथेः क्षणाच्छलभतां यान्ति स्म सर्व्वे ऽपि ते॥५९॥

सविमर्शं ॥ एवं किलेयं पाञ्चभौतिकी सृष्टिः।

त्रैलोक्यमप्यपर्याप्तं रक्षसां स्थातुमप्यदः।
येषां ते केवलं भूमौ विलिल्युः पञ्चतां गताः॥६०॥

वास० ॥ गन्धर्व्वराज पश्य विस्मयनीयविप्रलम्भौ किलामू रामरावणौ। यतः।

एताभ्यां राघवाभ्यां सकुतुकमिषुभिश्छिद्यमानेषु मूर्द्ध
स्वेकस्यैको ऽप्यनन्तः किमु सरसगुणौ वर्णनीयौ परस्य।
एतत्संपश्यतोरप्यतिचिरमनयोः को ऽप्यचिन्त्यः प्रभावो
यत्रोत्साहो न धैर्य्यं विरमति न शिरश्छेदतः पत्रिणो ऽपि॥६१॥

॥ नेपथ्ये ॥

भो भोः रामभद्र किमद्याप्युपेक्षसे दुर्वृत्तमेनं कथं वै क्रियासाध्यमेतावन्तमर्थं । अवधत्स्व तावत्

भवान् सीतालोकस्त्रिभुवनगतः प्रीतिमुचितां
कनीयान्पौलस्त्यः पुरममरतां स्वां पुनरयं ।
किमन्यान्यत्साक्षात्कृतपरमतत्त्वो मुनिगणः
प्रसादप्रोन्मीलन्मुदितमनसि शान्तिं च लभतां ॥ ६२ ॥

चित्र० ॥ निशम्य ॥ कथमेष दिव्यर्षिगणोऽप्येतयोर्वधाय राघवौ त्वरयति । अथवा दुर्वृत्तप्रशान्तिः कस्य न मनःप्रीत्यै ॥ ससंभ्रमाद्गतौत्सुक्यं ॥ देवराज पश्य ।

आभ्यां ब्रह्माच्युतास्त्रस्मरणसुरभिभिर्मार्गणै राघवाभ्यां
मूर्द्धानश्छिच्छिदाते रजनिचरपते रावणेश्च क्रमेण ।
पश्चाद्रक्षःकवन्धौ मृधभुवि विवशः सोऽपि रक्षोऽवरोधः
क्षोण्यां श्रीदाशरथ्योः शिरसि च वियतः पुष्पवर्षं पपात ॥ ६३ ॥

वास० ॥ नेपथ्याभिमुखमवलोक्य । सोल्लासं ॥ गन्धर्वराज पश्य तावदेते किल त्रिभुवनशत्रोर्दशकन्धरस्य निधनवृत्तान्तश्रवणेन प्रमोदनिर्भराः सहमहर्षयः सुमनसः कमपि महोत्सवमनुबुभूषन्तो मामेव प्रतीक्षन्ते तद्गच्छाम्येतेषां मनोरथसम्पादनाय । त्वमप्येतद्वृत्तान्तनिवेदनेन प्रियसखमलकेश्वरं प्रीणय ॥

॥ इति परिक्रम्य निष्क्रान्ताः सर्वे ॥

---

॥ षष्ठोऽङ्कः ॥ ६ ॥

---

## ॥ सप्तमोऽङ्कः ॥

॥ ततः प्रविशति शोकाकुला लङ्का ॥

लङ्का ॥ साक्रोशं ॥ हा महाराअदसकन्धर तेल्लोक्कवीरलच्छीपडिग्गहदुल्ललिद हा सअलरक्खसलोअपडिवालणसमत्थदुम्मदभुअदण्ड । हा पसुवइपादजुअलच्चणोपजुज्जन्तसुह्ममुहपुण्डरीअ हा केकसीपुत्ततिलअ हा वन्धुअणवच्छल कहिं मए तुमं पेक्खिदव्वो हा कुमारकुम्भअण्ण हा वच्छ मेहणाह कहिं सि देहि मे पडिवअणं ॥ परितो विलोक्य ॥ कहं को वि ण सन्तेदि ॥ ऊर्द्ध्वमवलोक्य ॥ हा दुट्ठदेव्वदुव्विलसिअ कीस एव्वं परिणदं सि अहवा को एत्थ भवदो उवालम्भो अत्तणो एव्व दुच्चरिदं एदं वि परिणमेदि ॥ इति सानुक्रोशं रोदिति ॥

॥ ततः प्रविशत्यलका ॥

अल० ॥ अहो कथमस्य रक्षःपतेरपूर्वः कोऽप्ययं दशापरिपाकः । यदेतावानपि रक्षःसर्गः क्षणेनैव विभीषणमात्रशेषः संवृत्तः ॥ शब्दश्रवणं नाटयित्वा परिक्राम्य ॥ कथं कनीयसी मे भगिनी प्रत्यग्रभर्तृविरहव्यथाविधुरा क्रन्दन्ती लङ्का ॥ उपसृत्य ॥ भगिनि समाश्वसिहि समाश्वसिहि ॥

लङ्का ॥ विभाव्य ॥ कहं वहिणिआ मे अलआ ॥

अल० ॥ भगिनि समाश्वसिहि २। एवं किलेयं लोक-यात्रा ॥

लङ्का ॥ अयि वहिणिए कुदो मे आसासो। जुवइजण-मेत्तसेसा संवुत्तम्हि। एको उण कुलतन्तू कुमारविहीसणो क्खु चिट्ठदि त्ति सुणीअदि सो वि मह मंदभाइणीए अधण-दाए रिउवक्खं जेव्व सेवेदि ॥

अल० ॥ अयि भगिनि मा मैवं न खल्वस्माकं स रि-पुपक्षः ॥

लङ्का ॥ कहं विअ ॥

अल० ॥ यस्य रिपुः स गतस्तच्च गतं। संप्रति तु निस-र्गसुहृदस्माकं त्रिभुवनप्रसिद्धसंवन्धो दाशरथिः ॥

लङ्का ॥ आश्वस्य ॥ कहं ईरिसो वि ॥

अल० ॥ ईदृश एव ॥

लङ्का ॥ कहं अम्ह सामिसु ईरिसो वि परिणदो ॥

अल० ॥ अप्यननुसंधाने किमेवं भाषसे। शृणु।

रघुकुलतिलकेऽस्मिन्भ्रातृमात्रद्वितीये
किमपि पितृनिदेशाद्दण्डकां संप्रविष्टे।
यदुचितममुना ते राक्षसानां विनेत्रा
विहितमयमशेषः कर्म्मणस्तस्य पाकः ॥ १ ॥

लङ्का ॥ हुं तुमं उण ईरिसे पत्थावे कहं एत्थ उव-ट्ठिदा सि ॥

अल० ॥ अवधत्स्व अहं किल वैमात्रकेण पौलस्त्येन

गन्धर्व्वराजाच्चित्ररथादमुं वृत्तान्तमुपलभ्य शिष्टबन्धुप्रतिबोधनाय विभीषणस्य च लङ्काभिषेकसाक्षात्करणाय रावणापहृतविमानराजस्य पुष्पकस्य च रामभद्रोपस्थानोपदेशदानाय संदिष्टा ॥

लङ्का ॥ अम्मो कहं भअवदो पसुवइणो वि मित्तं णिधाणाहिवई साअं एव्वं उवचरदि रामभद्दं।

अल० ॥ अयि किमत्राश्चर्य्यं।

इदं हि तत्त्वं परमार्थभाजा
मयं हि साक्षात्पुरुषः पुराणः।
त्रिधाविभिन्नप्रकृतिः किलैषा
त्रातुं भुवि स्वेन सतोऽवतीर्णा ॥ २॥

लङ्का ॥ कहं अम्ह सामिणा रक्खसणाहेण एदं ण ओधारिदं ॥

अल० ॥ अयि सरले शापमहिम्ना किल मूर्छन्मोहः सोऽपि नापराध्यति ॥

॥ नेपथ्ये कलकलः ॥ उभे ससंभ्रममाकर्णयतः ॥

॥ पुनर्नेपथ्ये ॥

समवधत्त भोस्त्रिजगच्चराणि भूतानि।

वस्वर्क्करुद्रसहितः स्वयमेष साक्षा
द्वृद्धश्रवाः समभिनन्दति साधु साध्वीं।
अग्निप्रवेशपरिनिर्गमशुद्धभावां
सीतां रघूत्तम भवत्स्थितिमाद्रियस्व ॥ ३॥

अल०॥ कथमेते दिवौकसोऽपि दशकन्धरगृहनिवास-व्यसनकौलीनशङ्कापनुत्त्यै कृतपावकप्रवेशनिर्गमनां सीतादेवीमभिनन्दन्ति । अहह ।

पतिव्रतामयं ज्योतिर्ज्योतिषान्येन शोध्यते ।
इदमाश्चर्य्यमथवा लोकस्थित्यनुवर्त्तनं ॥ ४ ॥

॥ शब्दश्रवणं नाटयित्वा ॥

लङ्का॥ कहं मङ्गलतूररवमिस्साओ गीदीओ णिसामीअन्ति ॥

अल०॥ नेपथ्याभिमुखमवलोक्य ॥ कथं सीताविशुद्ध्यनुमोदनार्थमवतीर्णाभिरप्सरोभिर्दिव्यर्षिगणैश्च रामभद्रनिदेशेन निष्पादिताभिषेककल्याणो विभीषणः पुष्पकं पुरस्कृत्य रामभद्रमभ्येति । तदेहि तथाविधसहजमहिममहनीयचरितमहानुभावावलोकनेन चक्षुःकृतार्थया च ॥ इति परिक्रम्य निष्क्रान्ते ॥

॥ मिश्रविष्कम्भकः ॥

॥ ततः प्रविशति पुष्पकं पुरस्कृत्य विभीषणः ॥

विभी०॥ अनुष्ठितः किल मया रामभद्रादेशः । तथाहि ।
सत्कृतं मातलिमनु ।

अजस्रगलदस्रसंप्लवकिणाङ्कगण्डस्थलाः
स्खलत्कनककङ्कणं नियमितैकवेणीभृतः ।
क्ष्मातलविवर्त्तनातिमलिनाम्बरा मोचिताः
प्रयान्ति किल संमिता स्म सुरलोकवन्दिस्त्रियः ॥ ५ ॥

उपसृत्य ॥ जयति जयति रामभद्रः। देव एव तदवसानः किल निदेशः संपादितः।

कार्त्तस्वराभिर्दृश्याभिः पताकाभिश्च सांप्रतं।
वन्दीभिरेधिताः काराः शृङ्खलाभिरलंकृताः ॥ ६ ॥

अयं च पुष्पकनामा स विमानराजः।

असंरुद्धगतेरिष्टप्रवृत्तेर्वशवर्त्तिनः।
मनोरथस्यानुगुणं सर्व्वदा यस्य चेष्टितं ॥ ७ ॥

रामः ॥ साधु लङ्केश्वर साधु संपादितं ॥ सुग्रीवं प्रति ॥ सखे वैकर्त्तने किमन्यावशिष्यते ॥

सुग्री० ॥ उत्खातस्त्रिभुवनकण्टकोऽतिहृष्य
द्दोर्दण्डाञ्चितमहिमाप्ययं निकारः।
देव्याश्च प्रतिशमितस्तथान्त संधा
निर्व्यूढा प्रगुणविभीषणाभिषेकात् ॥ ८ ॥

संप्रति तु द्रोणाद्रिं प्रत्याहरतो हनूमतः सविशेषं गृहीतप्रवृत्तिर्दुर्मनायते किल कुमारभरतः तं प्रति वार्त्ताहरः प्रविसृज्यतां प्राभञ्जनिः। स्वयमप्यलंक्रियतां विमानराजः॥

रामः॥ यदभिरुचितं प्रियवयस्याय ॥ इति तथा कृत्वा सर्व्वे विमानारोहणं नाटयन्ति ॥

सीता ॥ अपवार्य्य लक्ष्मणं प्रति ॥ अम्हेहिं संपदं कहिं पत्थीअदि ॥

लक्ष्म० ॥ देवि रघुकुलराजधानीमयोध्यां प्रति ॥

सीता ॥ अवि समत्तो सो वणवासस्स अवही ॥

लक्ष्म॰ ॥ देवि अद्यतनमेव दिनं तत् ॥ सर्वे विमानगतिं निरूपयन्ति ॥

सीता ॥ साङ्कुतं ॥ अज्जउत्त एदे उण कदमा दूरादो अणिद्धारिददक्खिणोद्देसा आवित्थरिज्जंतसामलत्तणपरिसरा दीसन्ति ॥

रामः ॥ देवि नैते भुवां परिसराः किंतु ।

साक्षात्किलाष्टमूर्त्तेस्तस्यैषा मूर्त्तिरम्मयी प्रथमा ।
गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्य्यः ॥ ९ ॥

सीता ॥ जो अम्हाणं जेट्ठससुरेहिं किदणिम्माणो त्ति वुड्ढपरंपराए सुणीअदि । एदस्स मज्झे वि किं एदं दूरप्पसारिदं धवलं सुत्तं विअ अहिणवतिणच्छणासु भूमिसु दीसइ ॥

लक्ष्म॰ ॥ देवि ।

सोत्साहं धृतशासनैः सकुतुकैर्वृक्षौकसां नायकै
र्दिक्पर्यन्तधराधरेन्द्रशिखराण्यानाय्य निर्म्मापितः ।
कल्पान्तावधिवन्धनीयमहिमा लोकस्य सेतुर्नवः
कीर्त्तिस्तम्भ इवायमार्य्यचरितस्याम्भोनिधौ लक्ष्यते ॥ १० ॥

रामः ॥ अङ्गुल्या निर्दिशन् ॥ वत्स ।

एता भुवाः परिचिनोषि मिलत्तमाल
च्छायान्धकारिततुषारनिकुञ्जपुञ्जाः ।
उन्मूर्च्छदच्छमलयाचलतुङ्गशृङ्ग
प्राग्भारनिष्पतितनिर्झरपूरभाजः ॥ ११ ॥

लक्ष्म॰ ॥ आर्य्य ता एवैताः । नातिदूर एव तावदासां स जीर्णकन्दरः ।

गर्ज्जोजर्ज्जरितासु दिक्षु वधिरे तत्स्फूर्ज्जथुस्फूर्ज्जिते
व्योम्नि भ्राम्यति दुष्प्रभञ्जनजवादभ्रेऽप्यदभ्रे मुहुः।
आक्षिप्यान्धयति द्रुमान्धतमसे चक्षुः प्रविश्य क्षपा
यत्रासीत्क्षपिता क्षरज्जलधरे त्वक्सारलक्षीकृते ॥ १२॥

सीता ॥ स्वगतं ॥ अहो पमादो कहं मह मन्दभाइणीए दुट्ठ-देव्वेहिं एदे वि महाणुहावा ईरिसं अवत्थन्तरं अणुहा-विदा ॥

विभी° ॥ देव रामभद्र दृश्यन्ते किलैताः कावेरीतीरभू-मयः ॥

यत्पर्यन्तमहीध्रसीम्नि कुहलीमाध्वीकधारोज्झिर
ज्झृष्यत्पूगवनीघनीकृतजलैस्तुङ्गैर्जरच्छाखिभिः।
लक्ष्यन्ते विविधाश्रमाः स्थिरतपःस्वाध्यायसाक्षात्कृत
ब्रह्माणो निवसन्ति यत्र मुनयः कल्पस्थितेः साक्षिणः ॥ १३॥

यतो नातिदूर एव किलावाच्यां लोपामूद्रापरिष्कृतपरिसरे दीप्यति कौम्भसंभवं ज्योतिः ॥

रामः ॥ कथमतिक्रान्तमागस्त्यमाश्रमपदं।

अयं वारां राशिः किल मरुरभूद्यद्विलसितै
रयं विन्ध्यो येनाहृतविहृतिराध्मानमजहात्।
विलिल्ये यत्कुक्षिस्थितशिखिनि वातापिवपुषा
स कासां वाणीनां मुनिरकलितात्मास्तु विषयः ॥ १४॥

तदप्रमेयविभवा विश्वान्तरात्मसाक्षिणस्ते महात्मानः कुतश्च नाभिवन्द्याः ॥ सर्व्वे तथा कुर्व्वन्ति ॥

॥ आकाशे ॥

सानुजस्त्वं प्रजाः शाधि कल्पान्तस्थायि ते यशः ।
नामापि राम गृणतामसृतत्वाय कल्पतां ॥ १५ ॥

रामः ॥ आकर्ण्य ॥ कथमशरीरिण्या गिरा परमनुगृहीतो महामुनिवन्दारुः ॥

॥ इतरे अभिनन्दन्ति ॥

विभी० ॥ देव रामभद्र एतास्ताः पम्पापर्यन्तभूमयः यासु वहोः कालादनुभूयमानान्यप्यभिज्ञानानि वलाच्चक्षुराकर्षन्ति । तथा हि ।

वाणेनैकेन विद्धं विलसति पुरतस्तज्जरत्तालखण्डं
सोऽपि क्रीडाकपित्वं क्षणमिषुनिवहैरन्वभूदत्र वाली ।
सौमित्रिः पादघातादिह हि सकुतुकं प्राक्षिपत्कूटमस्थ्नां
कावन्धं दृष्टमस्मिन्हनुमति भवतैवोत्तरीयं च देव्याः ॥ १६ ॥

सीता ॥ स्वगतं ॥ किं णाम मह उत्तरीअं अज्जउत्तेण हणुमंतस्स हत्थे दिट्ठं ॥

रामः ॥ सस्मरणं ॥ हे देवि तदा किल वैक्लव्यादपह्रियमाणाया भवत्याः प्रभ्रष्टमनसूयानामाङ्कमुत्तरीयमस्माभिः प्रथममभिज्ञानमासादितं ।

दृशोः शरच्छीतकरप्रकाशः
कायेऽपि कर्प्पूरपरागपूरः ।
स्वान्तेऽपि सान्द्रामृतकुम्भसेक
स्तदा यदासीत्किल दृष्टमात्रं ॥ १७ ॥

॥ सीता शृङ्गारलज्जां नाटयति ॥

लक्ष्म० ॥ अयं

तातस्य मित्रं किल गृध्रराज
स्तं पापमस्मिन्सहसानुबध्नन् ।
गात्रं जराजर्ज्जरितं विहाय
यशःशरीरं नवमाललम्बे ॥ १८ ॥

सीता ॥ स्वगतं ॥ कहं मह कारणादो तारिसाणं वि महाणुहावाणं ईरिसो अवत्थाविसेसो णिसामीअदि ॥

सुग्री० ॥ देव अतिक्रम्यन्ते किलैता दण्डकासीमानः ।

यत्र तेऽपि स्वसुः कर्णनासौष्ठविचिचीषया ।
सानुप्लवाः क्वापि यातास्त्रिमूर्द्धखरदूषणाः ॥ १९ ॥

सीता ॥ वेपमाना ॥ अम्मो कहं पुणो वि ज्जेव्व रक्खसा सुणीअंति ।

रामः ॥ देवि अलं शङ्कयाभिधानमात्रमवशिष्यते ।

शरासनस्य टङ्कारात्सौमित्रेः केवलं किल ।
रक्षसां प्रलयः सिंहगर्ज्जनाद्दन्तिनां यथा ॥ २० ॥

निरूप्य ॥ किमन्यादृशीव गतिरस्य विमानराजस्य ॥

विभी० ॥ देवात्युच्चैः किलायं सह्यः सानुमान् । एनमतिक्रम्य गम्यते किलार्य्यावर्त्तः । तदतिक्रमणायेदमपि मध्यमलोकसांनिध्यं किंचिदुज्झति ॥

लक्ष्म० ॥ द्रष्टव्यः किलोत्तमपुरुषपदलाञ्छितो मध्यमलोकः ॥

॥ सर्व्वे उच्चैर्गतिवेगं निरूपयन्ति ॥

रामः ॥ निरूप्य । सविस्मयं ॥

य: पूर्व्वेषां नः कुलस्य प्रतिष्ठा
देवः साक्षादेष धाम्नां निधानं।
त्रय्याः सारः कोऽपि मूर्त्तो विवस्वा
न्प्रत्यासन्नः पुष्पकारोपणेन ॥ २१ ॥

॥ सर्व्वे कपोतकेन प्रणमन्ति ॥

सीता ॥ उच्चैर्निरूप्य ॥ अम्मो कहं दिणम्मि वि तारआचक्कं विअ एदं दीसदि ॥

रामः ॥ देवि तारकाचक्रमेवैतत् । अतिविप्रकर्षाद्रविकिरणप्रतिहतचक्षुर्भिर्न दृश्यते किल दिवसे सविमानारोहणादपास्त ॥

सीता ॥ सकुतुकं ॥ कहं गअणवाडिआए फुल्लाइं कुसुमाइं व्व दीसंदि ॥

रामः ॥ समन्तादवलोक्य ॥ कथमपरिच्छेद्यदिग्विभागमिव संप्रति जगत् यतः ।

संस्तूयन्ते विप्रकर्षाद्भौमा नोपाधयः स्फुटं।
आन्तरिक्षाः पुनरमी सर्व्वतः सदृशा इव ॥ २२ ॥

सुग्री० ॥ देव भ्रातुः सौहार्द्देन विधेयीकृतो यदृच्छया दिगन्तेषु विचरन्नभ्युपपन्नवानस्मि । तथा हि ।

उदयास्ताचलावेतौ यत्क्रोडे बाल्यवार्द्धके।
विस्रम्भाच्चन्द्रसूर्य्याभ्यामतीयते विनिर्भयं ॥ २३ ॥

अवधत्तामितो देवः ।

कैलासाञ्जनशैलावेतौ तुल्योन्नतत्वपरिणाहौ।
चन्दनमृगमदलेपं गमितौ क्षोण्या न वक्षोजौ ॥ २४ ॥

इतश्चायं काञ्चनाचलः । परतश्चायमभ्रङ्कषशिरःशिखरी गन्धमादनः ततः परस्मादगम्या मादृशां भूमयः ॥

रामः ॥ परितो विलोक्य । ससंभ्रमाद्भुतं ॥ कथमेकपद एव सर्व्वमहो चक्षुर्गोचरः । परिच्छेद्या च सर्गस्थितिः ॥

सीता ॥ अम्मो एदं किं वि अदिट्ठपुव्वं असारिसं जेव्व दीसइ ण माणुसो णवि पसू ॥

रामः ॥ देवि अश्वमुखं किन्नरमिथुनमेतत् । प्रायेणैतासु भूमिष्वेवंविधानामेव भूयसां प्रचारः ॥

विभी॰ ॥ कथं समुन्मुखमेवाभ्येति । प्रायेणालकेश्वरादेशधारिणानेन भवितव्यं ॥

॥ नेपथ्ये ॥

देव दिनकरकुलमणे रामभद्र भवन्तमेकपिङ्गाचलेश्वरनिदेशादुपश्लोकयितुं साकेतं प्रस्थितयोरावयोर्नौ सुकृतपरिणामादन्तराल एव चक्षुर्विषयोऽसि । तन्निदेशपारतन्त्र्यमपि भूयसे गुणाय । यत्पुराणस्यैव पुंसोऽभिव्यक्तिपर्यायनिष्ठं महः साक्षात्क्रियते ॥ इति प्रदक्षिणीकृत्याभिवन्देते ॥

॥ सर्व्वे निरूपयन्ति ॥ पुनर्नेपथ्ये किन्नरः ॥

आपन्नवत्सलजगज्जननैकबन्धो
विद्वन्मराल कमलाकर रामचन्द्र।
जन्मादिकर्म्मविधुरैः सुमनश्चकोरै
राचम्यतां तव यशः शरदां सहस्रं ॥ २५ ॥

॥ तत्रैव किन्नरी ॥

यावत्फणीन्द्रशिरसि क्षितिचक्रमेत
त्तावत्पुनर्ग्रहगणैः शबलं विहाय।
वैदेहि तावदमलो भुवनेषु पुण्यः
श्लोकः प्रशस्तचरितैरुपगीयतां ते ॥ २६॥

॥ दम्पती मन्दाक्षं नाटयतः ॥

इतरे ॥ प्रियं प्रियं नः ॥

रामः ॥ लङ्केश्वर चिरसंचरणादत्र न अनुरोधं तर्क्कये। तद्वरमितो मध्यमलोकसांनिध्येन गन्तुं ॥

विभी॰ ॥ देव।

एते ते सुरसिन्धुधौतदृषदः कर्पूरखण्डोज्ज्वलाः
पादाजर्ज्जरभूर्ज्जवल्कलवतो गौरीगुरोः पावनाः।
तत्त्वालोकनिरस्तमोहतमसामध्यात्मविद्याजुषां
यत्र ब्रह्मविदां निसर्ग्गमधुरं जागर्त्ति सौम्यं महः ॥ २७॥

लक्ष्म॰ ॥ आर्य्य कथमेते भुवां परिसराः संस्तुतपूर्व्वान्यविषयग्राहित्वं न क्षमन्ते चक्षुषोः ॥

रामः ॥ निरूप्य। सस्मरणावेगं ॥ वत्स ता एवैता गुरूणां कौशिकपादानां संचरणेन पवित्रितपर्यन्तास्तपोवनभूमयः। यत्र तु तत्रभवता याज्ञवल्क्यान्तेवासिना द्वितीयेन विदेहाधिपतिना सह तत्संलापामृतप्रमोदमनुभवतां गुरूणां लालनीयाभ्यामावाभ्यां बालोचितमुल्ललितं ॥

सीता ॥ स्वगतं ॥ कहं कण्ठिदादो त्ति सुणीअदि ॥ इति परितः सस्पृहमालोकयते ॥

रामः ॥ लङ्केश्वर नोचितमिदानीं गुरुचरणपङ्कजपवित्रितेषु परिसरेषु विमानाधिरोहणं ॥

॥ नेपथ्ये ॥

भो भोः रामलक्ष्मणौ । स भगवान्कृशाश्वान्तेवासी वां समाज्ञापयति ॥

उभौ ॥ विमानाधिदेवतामिङ्गितेन स्तम्भाय नियुज्य ॥ अवहितौ स्वः ॥

॥ पुनर्नेपथ्ये ॥

पुरीं यथा स्थितौ यातं विलम्बेथां च मान्तरा ।
अरुन्धती सहचरं ज्योतिर्भासं प्रतीक्षते ॥ २८ ॥

अहमपि तृतीयकालक्रियानुसंधानपरवान्मुहूर्त्तद्वयेनागत एव ।

उभौ ॥ यथाज्ञापयन्ति गुरवः ॥ पुनर्विमानं प्रतिष्ठते ॥

रामः ॥ अहो महात्मानोऽपि वात्सल्यपरतन्त्राः । यन्महिम्ना तपःस्वाध्याययोर्लवशो विभक्ते समये तत्राप्यागमनमनुरुध्यन्ते । अथवा युक्तमेवैतत् । यतः करुणापारतन्त्र्येण मृदुस्वभावास्ते तपोवनगुरुषु तरुषु च किं मनुष्येषु विशेषतस्तु

राज्ञां मार्त्तण्डवंश्यानां गृहे नौ जन्म केवलं ।
शास्त्रास्त्रज्ञानमुख्यस्तु संस्कारोऽस्मान्महात्मनः ॥

विभी० ॥ विलोक्य ॥ किमिदमकाण्ड एव नीहारजालैरिव क्ष्मारजोभिराच्छाद्यन्ते ककुभः ॥ सर्वे सविस्मयं पश्यन्ति ॥

रामः ॥ सवितर्कं ॥ मन्ये प्राभञ्जनेरस्मत्प्रवृत्तिमुपलभ्य मां प्रत्युपयातीव ससैन्यो भरतः ॥

॥ प्रविश्य हनूमान् ॥

हनू० ॥ सपादपङ्कजस्पर्शं प्रणम्य ॥ देव ।

स्थितो ध्यायन्नन्तः किमपि चरितं स्वेन भवत
श्चिरं वार्त्तामेनामथ मदुपलभ्य प्रचलितः ।
जटी चीरी रामेत्यमृतविभवन्नाम रसय
न्मुहुर्हर्षोद्भ्रान्तप्रकृतिसहितोऽभ्येति भरतः ॥ २९ ॥

रामः ॥ सोल्लासं ॥ अहो चिरायायुष्मत्सौहार्दमुपलभामह इति सर्वानान्दानामुपरि वर्त्तामहे ॥

लक्ष्म० ॥ सौत्सुक्यं ॥ सखे मारुते कुत्रार्य्यः ॥

हनू० ॥ य एते सैन्यस्य पुरतः पञ्चषास्तन्मध्ये पुरःसरः सानुजः स महात्मा भरतः ॥

॥ लक्ष्मणः निर्वर्णयति ॥

सीता ॥ निरूप्य ॥ कहं अणारिसो जेव्व दीसइ ॥

विभी० ॥ हंहो विमानराज चिराय बन्धुजनदर्शनालिङ्गनसंभावनादिना मिथोऽङ्गप्रमोदमनुभवन्त्वेते महानुभावास्तत्क्षणं विरम ॥ सर्व्वे विमानावतरणं नाटयन्ति ॥

॥ ततः प्रविशतः कतिचनप्रधानपुरुषपरिवृत्तौ भरतशत्रुघ्नौ ॥

रामः ॥ सरभसं पादपतितं भरतमुत्थापयति ॥ एह्येहि वत्स ।

अनुभावयति ब्रह्मानन्दसाक्षात्क्रियामिव ।
स्पर्शन्तेऽद्य वराम्भोजप्रस्फुरन्नालकर्क्कशः ॥ ३० ॥

॥ इति निर्भरमालिङ्ग्य विसृजति । लक्ष्मणः सपादपतनं भरतमालिङ्गति । शत्रुघ्नः रामलक्ष्मणावभिवादयति ॥

उभौ ॥ कुलस्थितिमनुवर्त्तस्व ॥

॥ भरतशत्रुघ्नौ दण्डवत्सीतां प्रणमतः ॥

सीता ॥ कुमारा जेट्ठाणं भादुआणं अभिमदा होह ॥

रामः ॥ वत्सौ भरतशत्रुघ्नौ ।

अस्माकं व्यसनाम्भोधावयं पोतत्वमागतः ।
कपीन्द्रोऽयं च लङ्केन्द्रो मित्रं धर्म्महिते रतः ॥ ३१ ॥

तत्परिष्वजतं ॥ इति सुग्रीवविभीषणौ दर्शयति ॥

॥ भरतशत्रुघ्नौ तौ परिष्वज्य यथोचितमुपचरन्ति ॥

भर० ॥ आर्य्य कुलगुरुर्नो भगवान्मैत्रावरुणिः सिंहासनग्रहे संपादितसकलाभिषेकसंभारो भवन्तं प्रतीक्षते । यथाज्ञापयत्यार्य्यः ॥

रामः ॥ स्वगतं ॥ कौशिकपादाः प्रतीक्षणीयाः स च भगवान्मैत्रावरुणिरेवमाज्ञापयति । भवतु समयोचितं प्रतिकरिष्यते ॥ प्रकाशं ॥ यथाज्ञापयति कुलगुरुः ॥ सर्व्वे परिक्रामन्ति ॥

॥ ततः प्रविशति वसिष्ठो दशरथकलत्रैरुपचर्य्यमाणारुन्धती च ॥

वसि० ॥ स्वगतं ॥

क्षमायाः सक्षेत्रं गुणमणिगणानामपि खनिः
प्रपन्नानां मूर्त्तः सुकृतपरिपाको जनिमतां ।
कृपारामो रामो वहिरिह दृशो यास्यत इति
प्रमोदाद्वैतस्याप्युपरि परिवर्त्तामह इमे ॥ ३२ ॥

भवतु तथापि लोकयात्रानुवर्त्तनीया ॥ प्रकाशं ॥ वध्वौ कौशल्यासुमित्रे ॥

उभे ॥ आणवेदु कुलगुरू ॥

वसि० ॥ दिष्ट्याक्षतप्रतिनिवृत्तवत्से स्तः ॥

उभे ॥ तुम्हाणं आसिसाणं पहावो ॥

अरु० ॥ कैकेयीं विलोक्य ॥ वत्से कैकेयि किमेवमतिदुर्मनायसे ॥

कैके० ॥ अंब मह मन्दभाइणीए अधणदाए सअलो वि लोओ एव्वं कोलीणं भणादि । जं वच्छाणं पवासजणणी मज्झमजणणी मन्थरामुहे आसि । ता कहं वच्छाणं मए मुहं पेक्खिदव्वं ॥

अरु० ॥ वत्से अलं वृथाकौलीनशङ्कया । आर्य्यमिश्रैरयमर्थस्तदैवान्तरेण चक्षुषा साक्षात्कृतः ॥

सर्व्वाः ॥ कहं विअ ॥

अरु० ॥ मन्थरारूपधारिण्या शूर्प्पणख्या माल्यवद्वचनादेतद्विहितमिति ॥

सर्व्वाः ॥ अहो रक्खसाणं दुट्ठताभिओओ जो इह ट्ठिदं अवलाजणं विवाधेदि ॥

वसि० ॥ हुं मङ्गलसमयेऽलमलं यत्किंचिद्दुःखकैः का पुनरद्यापि राक्षसाभियोगवार्त्ता ॥

रामः ॥ वसिष्ठं विलोक्य । सोल्लासं ॥ स एष भगवान्मैत्रावरुणिः ।

यद्दर्शनात्किमप्येतद्द्रवीभवति मे मनः।
राकासुधाकरालोकादिन्दुकान्तोपलो यथा ॥ ३३ ॥

लक्ष्मणं प्रति ॥ वत्स इत इतः ॥

उभौ० ॥ उपसृत्य ॥ भगवन्कुलगुरो रामलक्ष्मणावभिवादयावह इति ॥

वसि० ॥ चक्षुषां स्वस्वसमये संस्कारत्वं समाप्नुतां।
वत्सौ नयेन धर्म्मेण ज्ञानेन च पुरस्कृतं ॥ ३४ ॥

॥ उभावरुन्धतीमभिवन्देते ॥

अरु० ॥ इष्टैर्युज्येथां ॥

॥ उभौ क्रमेण सर्व्वा मातॄरभिवन्देते ॥

सर्व्वाः ॥ तौ निर्भरं परिष्वज्य मूर्द्धुपाघ्राय ॥ जं अम्हे चिंतेमो तं तुम्हाणं होदु ॥

॥ सीता । उपश्रित्य । वसिष्ठं प्रणमति ॥

वसि० ॥ वत्से वीरप्रसविनी भव ॥

॥ सीतारुन्धतीं प्रणमति ॥

अरु० ॥ सीतां निर्भरमालिङ्ग्य ॥

लोपमुद्रानुसूयाहमिति तिस्रस्त्वया सह।
पतिव्रताश्चतस्रोऽच सन्तु जानकि सांप्रतं ॥ ३५ ॥

॥ सीता श्वश्रूरभिवन्दते ॥

सर्व्वाः ॥ जादे कुलपडिट्ठावअदारअप्पसविणी होहि ॥

॥ नेपथ्ये ॥

प्रवर्त्तन्तां पौराः प्रतिसदनमद्योत्सवविधौ
चिरं स्वे स्वे कर्म्मण्यथ समवधत्ताप्यधिकृताः ।
यथोक्तं संभारं पुनरिह विधत्त द्विजवराः
कृशाश्वान्तेवासी कुशिकपतिराज्ञापयति वः ॥ ३६ ॥

वसि० ॥ आकर्ण्य ॥ अहोऽयं भाग्यमहिमा वत्सस्य । यद्भगवान्कौशिकः स्वयं सिंहासने समभिषेक्तुं संप्राप्तः ॥

इतरे ॥ प्रियं नः ॥

॥ ततः प्रविशति सशिष्यो विश्वामित्रः ॥

विश्वा० ॥

सत्रप्रत्यूहशान्त्यै दशरथकरतः कर्षतैनं मया य
द्यत्स्वान्ते संविमृष्टं तदनुगुणविधौ यच्च वैयग्र्यमासीत् ।
तद्देवस्यावगुण्यात्प्रपतनविभवैश्चाद्य राज्येऽभिषिच्य
श्रीरामं निर्वृतानां फलितमिति मुहुः संप्रमोदामहे ॥ ३७ ॥

॥ इति परिक्रमति ॥

वसि० ॥ स एष कौशिकः ।

क्षात्रं प्राकृतिकं तेजो ब्राह्मं यस्य विशिष्यते ।
लोकोत्तरचमत्कारनिधेस्तस्याद्भुतं न किं ॥ ३८ ॥

॥ वसिष्ठविश्वामित्रावुपसृत्यान्योन्यमुपचरतः ॥

विश्वा० ॥ भगवन्मैत्रावरुणे किमद्यापि प्रतीक्ष्यते ॥

वसि० ॥ यथोचितमाद्रियतां ॥

विश्वा॰ ॥ दिव्यर्षिगणमुद्दिश्य ॥ निर्वर्त्त्यतां रामभद्रस्याभिषेकः ॥

॥ मुनयः यथोचितमाचरन्ति । नेपथ्ये दुन्दुभिध्वनिः । सर्व्वे सविस्मयं पुष्पवृष्टिं रूपयन्ति ॥

वसि॰ ॥ कथं । सलोकपालो भगवान्पाकशासनो रामभद्रस्याभिषेकमनुमोदते ॥

कृताभिषेकमङ्गलो रामः ॥ वसिष्ठविश्वामित्रावुपसृत्य ॥ गुरू अभिवादये ॥

उभौ॰ ॥ रामभद्र गुणासमभ्रातृभिस्त्वं पुरस्कृतः ।
इक्ष्वाकुमुख्यैर्भूपालैश्चिरमूढां धुरं वह ॥ ३९ ॥

इतरे ॥ तथास्तु ॥ इत्यनुमोदन्ते ॥

विश्वा॰ ॥ वत्स रामभद्र ॥

रामः ॥ आज्ञापयन्तु गुरवः ॥

विश्वा॰ ॥ विसृज्येतामेतावनुभूतोत्सवप्रमोदौ सुग्रीवविभीषणौ । पुष्पकं च संकल्पसमयसुलभं राजराजमेवाश्रयतां ॥

॥ रामः तथा करोति ॥

विश्वा॰ ॥ वत्स रामभद्र ॥

निर्व्यूढं गुरुशासनं गुरुतरं धर्म्मोऽपि संरक्षितो
रक्षःसंहरणाच्चिकित्सितमनोरोगा त्रिलोकी कृता ।
सिद्धार्थाश्च सुराः सहानुजसुहृद्द्वारेण राज्यं पुन
र्लब्धं किं करणीयमेतदधिकं श्रेयस्तदप्युच्यतां ॥ ४० ॥

रामः ॥ इतोऽधिकमपि श्रेयोऽस्ति । तथापीदमस्तु भगवत्पादप्रसादाद्भरतवाक्यं ॥

क्ष्मापालाः क्षीणतन्द्राः क्षितिवलयमिदं पान्तु ते कामवर्षा
वार्वाहाः सन्तु राष्ट्रं पुनरखिलमपास्ते ऽतिसंपन्नसस्यं ।
लोके नित्यं प्रमोदं निदधतु कवयः श्लोकमाप्तप्रसादं
संख्यावन्तो ऽपि भूम्ना परकृतिषु मुदं संप्रधार्य प्रयान्तु ॥ ४१ ॥

विश्वा० ॥ एवमस्तु ॥

॥ इति निष्क्रान्ताः सर्वे ॥

॥ सप्तमोऽङ्कः ॥ ७ ॥

॥ समाप्तमिदं वीरचरितं नाम नाटकं ॥

# ERRATA.

| Page. | Line. | | | |
|---|---|---|---|---|
| 3. | 14. | *for* आणवेदि | *read* | आणवेदि. |
| 4. | 6. | .. हिसूत | ... | हि सूत. |
| 7. | 16. | .. आम्नाय | ... | आम्नाय. |
| 10. | 15. | .. परमेष्ठिनः | ... | परमेष्ठिनः. |
| 14. | 1. | .. तत्व | ... | तत्त्व. |
| 15. | 3. | dele । | | |
| 18. | 5. | *for* आभिरूप | ... | गभिरूप. |
| 23. | 1. | .. विरमिस्सदित्ति | ... | विरमिस्सदि त्ति. |
| 24. | 6. | .. उवणासो | ... | उवणासो. |
| 28. | 10. | .. त्तेल्लोक्क | ... | तेल्लोक्क. |
| — | 12. | .. लछीलछणं | ... | लच्छीलच्छणं. |
| 29. | 17. | .. पेछिज्जन्त | ... | पेच्छिज्जन्त. |
| 33. | 6. | .. उसन्तस्स | ... | उ सन्तस्स. |
| 52. | 14. | .. लखण | ... | लक्खण. |
| 56. | 3. | .. पेखिदव्वं | ... | पेक्खिदव्वं. |
| 57. | 16. | .. एतत | ... | एतत्. |
| 65. | 4. | .. वछ | ... | वच्छ. |
| — | 5. | .. पुत्तस्स | ... | पुत्तस्स. |
| 69. | 20. | .. उपानद्युगलं | ... | उपानद्युगलं. |
| 75. | 12. | .. नासोष्ठ | ... | नासौष्ठ. |
| 83. | 13. | .. ज्यातिषः | ... | ज्योतिषः. |
| 93. | 10. | .. फालत | ... | फलित. |
| 97. | 15. | .. जम्बूद्वीपे | ... | जम्बुद्दीपे. |
| 99. | 3. | .. अधिटिदं | ... | अधिट्ठिदं. |
| 100. | 11. | .. कज्जाणक्खेवो | ... | कज्जणिक्खेवो. |
| 101. | 18. | .. उवदिटो | ... | उवदिट्ठो. |
| 104. | 5. | .. वादिना | ... | वादिनो. |
| 131. | 22. | .. स्पर्शन्ते | ... | स्पर्शे ते. |
| 135. | 17. | .. व्राजं | ... | व्राजं. |
| 136. | 7. | dele ० | | |